श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यप्रणीता

# कारिकावली

## न्यायमुक्तावलीसंवलिता

दिनकरी-रामरुद्रीव्याख्याभ्यां

च सनाथीकृता

इयं

तत्त्वज्ञानमन्दिरे न्यायवेदान्ताध्यापकेन जेरे इत्युपाह्वेन-

*नारायणसूनुना आत्मारामशर्मणा*

**टिप्पणादिभिः परिष्कृत्य संशोधिता**



**राष्ट्रिय संस्कृत संस्थान**

५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी

नई दिल्ली-११० ०५८

प्रकाशक :

*प्रो. वी. कुटुम्ब शास्त्री*

निदेशक

**राष्ट्रिय संस्कृत संस्थान**

५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी

नई दिल्ली-११० ०५८

**पुनर्मुद्रित संस्करण, २००२**

**मूल्य :** रु० ४९.००

मुद्रक :

**चौखम्बा संस्कृत सीरीज आफिस**

के. ३७/९९, गोपाल मन्दिर लेन

गोलघर (मैदागिन) के पास

पोस्ट बॉक्स नं० १००८, वाराणसी-२२१ ००१ (भारत)

फोन : ३३३४५८ (आफिस), ३३४०३२ एवं ३३५०२० (आवास)

e-mail : cssoffice@satyam.net.in

# KĀRIKĀVALĪ

Of

VIŚWANĀTHA NYĀYAPAÑCĀNANA BHATTĀCĀRYA

**with the commentaries**

**Muktāvalī, Dinakarī, Rāmarudri**

**Edited with Foot-Notes Etc.**

**by**

***Ātmārām Nārāyan Jere***



**RASHTRIYA SANSKRIT SANSTHAN**

56-57, Institutional Area, Janakpuri

New Delhi - 110 058

*Publisher*

*Prof. V. Kutumba Shastri*

**Director**

RASHTRIYA SANSKRIT SANSTHAN

56-57, Institutional Area, Janakpuri
New Delhi - 110 058

**Reprinted, 2002**

**Price : Rs. 49.00**

***Printer :***

**CHOWKHAMBA SANSKRIT SERIES OFFICE**

K. 37/99, Gopal Mandir Lane
Near Golghar (Maidagin)
Post Box No. 1008, Varanasi-221 001 (India)
Phone : Off. 333458, Resi. : 334032 & 335020
e-mail : cssoffice@satyam.net.in




मानव संसाधन विकास मंत्री
भारत
नई दिल्ली - ११० ००१
HUMAN RESOURCE DEVELOPMENT
INDIA
NEW DELHI - 110 001

डा. मुरली मनोहर जोशी
DR. MURLI MANOHAR JOSHI

# सन्देशः

संस्कृतसाहित्ये सन्ति बहूनि ग्रन्थरत्नानि येषां पठनपाठनम् अनुसन्धानं च सहस्रेभ्यो वर्षेभ्यः राष्ट्रेऽस्मिन् निरन्तरं प्रवर्तमानम् आसीत्। वेदशास्त्रस्मृतिपुराणादिरूपं विशालकायं वाङ्मयं संस्कृते उपलभ्यमानमस्ति। तदेतत् वाङ्मयं प्रतिष्ठितैः विद्वद्भिः तदा तदा महता परिश्रमेण महता च धनव्ययेन अंशतः प्रकाशितमप्यासीत्। परन्तु गच्छता कालेन संस्कृत-मुद्रितपुस्तकानामुपलब्धिः पण्डितेभ्यः छात्रेभ्यः तथा सामान्यजनेभ्यः दुर्लभा जाता। अतः सुदुर्लभान् सुसम्पादितान् एतान् बहूपयोगिनः संस्कृतग्रन्थान् छायाचित्रद्वारकमुद्रण-विधिमनुसृत्य पुनर्मुद्रयित्वा न्यूनतममूल्येन विक्रयणं कर्तुं काचित् महत्त्वपूर्णा योजना मानवसंसाधनविकासमन्त्रालयेन स्वीकृता तदङ्गभूत-राष्ट्रियसंस्कृतसंस्थानेन कार्यान्विता चासीत्। ऐषमः पुस्तकवर्षे विक्रीतचराणाम् एकपञ्चाशत् ग्रन्थानां मुद्रणं विधातुं संस्थानेन संकल्पितमस्ति।

अहमाशासे यत् दूरगामिना एतेनोपक्रमेण संस्कृतविद्वांसः, छात्राः संस्कृतप्रेमिणः सामान्यजनाश्च लाभान्विताः भवेयुः, संस्कृतनिष्ठं ज्ञानवैभवम् इतोऽपि अधिकतरं विशदायमानं च भवेत्। कामये यत् राष्ट्रियसंस्कृतसंस्थानं योजनायामस्यां भिन्नभिन्नान् महत्त्वपूर्णान् ग्रन्थान् प्रकाश्य संस्कृतस्य सेवां इतोऽप्यधिकं कुर्यादिति।

संस्कृत साहित्य में अनेक ग्रन्थरत्न विद्यमान हैं जिनका पठन-पाठन एवं अनुसन्धान इस राष्ट्र में सहस्रों वर्षों से चला आ रहा है। वेद, शास्त्र, स्मृति एवं पुराण जैसे विशाल ग्रन्थ संस्कृत वाङ्मय के अंग हैं। यह वाङ्मय समय-समय पर प्रतिष्ठित विद्वानों द्वारा परिश्रम एवं आर्थिक व्यय से अंशतः प्रकाशित भी हुआ है। किन्तु समय के साथ इन ग्रन्थों की मुद्रित पुस्तकें छात्रों, विद्वानों एवं सामान्यजनों को दुर्लभ होने लगी हैं। अतः इन दुर्लभ सुसम्पादित ग्रन्थों का पुनर्मुद्रण कर न्यूनतम मूल्य पर उपलब्ध कराने की योजना मानव-संसाधन-

विकास-मंत्रालय एवं उसके अंगीभूत राष्ट्रिय-संस्कृत-संस्थान के द्वारा कार्यान्वित की गयी है। इस पुस्तक वर्ष में इक्यावन पुस्तकों का पुनर्मुद्रण संकल्पित है जो संस्थान के विक्रय विभाग में सम्प्रति अनुपलब्ध हो चुकी है।

मैं आशा करता हूँ कि इस दूरगामी उपक्रम से संस्कृत के विद्वान्, छात्र एवं संस्कृतप्रेमी सामान्यजन लाभान्वित होंगे तथा संस्कृत के ज्ञान वैभव का विस्तार होगा। साथ ही मैं यह कामना करता हूँ कि राष्ट्रिय संस्कृत संस्थान इस योजना में अन्य महत्त्वपूर्ण ग्रन्थों को भी प्रकाशित कर संस्कृत की श्रीवृद्धि करेगा।

(डा. मुरली मनोहर जोशी)

नई दिल्ली

09-04-02

# आमुखम्

श्रीविश्वनाथपञ्चाननप्रणीतां न्यायसिद्धान्तमुक्तावलीमधिकृत्य विरचितां दिनकरीति प्रथितामिधानां टीकां, तां चाधिकृत्य श्रीमता रामरूद्रपाण्डेय विरचितां रामरुद्रीति नाम्ना प्रसिद्धां टीकां को वा नैयायिकः न जानाति। परिष्करणरीत्या न्यायशास्त्रस्य ग्रान्थिविशरणगुणाः इमाः टीकाः अद्यापि आदरेण पठ्यन्ते पाठ्यन्ते च। महता प्रयासेन धनव्ययेन च प्रकाशितचराः ईदृशाः ग्रन्थाः कालान्तरे दुर्लभतां गताः। तेन च संस्कृताध्ययन-अनुसंधानक्षेत्रे काठिन्यम् अनुभूयमानमासीत् भारत-शासनान्तर्गत मानवसंसाधनविकास-मन्त्रालयस्य प्रकाशिता चराणां दुर्लभानां च ग्रन्थानां पुनर्मुद्रणात्मकपरियोजनायां पुनर्मुद्रिताः अपि इमे ग्रन्थाः कालक्रमेण भूयोऽपि दुर्लभतां गताः। अतः द्वितीयवारमपि पुनर्मुद्रणं कारयित्वा पुस्तकानां सुलभता सम्पादनीया इत्येतत् मन्त्रालयस्य सङ्कल्पमनु ग्रन्थरत्नस्यास्य पुनर्मुद्रणं प्रकाशनं च विधीयमानमस्ति।

सन्दर्भेऽस्मिन् अपेक्षितं मार्गदर्शनं तथा शुभसन्देशं प्रदाय राष्ट्रियसंस्कृत-संस्थानं समेधितवद्भ्यः मानवसंसाधनविकासमन्त्रिवर्येभ्यः डॉ० मुरलीमनोहर जोशी महाभागेभ्यः आधमर्ण्यं वहामि। संस्थानस्य अर्थसमितेः अध्यक्षेभ्यः निर्णयस्यास्य स्वीकारे सहकृतवद्भ्यः उपाध्यक्षेभ्यः श्री नी० गोपालस्वामी महोदयेभ्यः हार्दान् धन्यवादान् व्याहरामि। प्राशासनिकं साहाय्य विधाय कार्य-साफल्याय सहकृतवत्यै मानवसंसाधनविकासमन्त्रालयस्य भाषाविभागे संयुक्त-सचिवायै श्रीमत्यै बेला बैनर्जीमहाभागायै तथा अन्येभ्यश्च तद्विभागीयाधिकारिभ्य धन्यवादान् व्याहरामि।

सङ्कल्पस्यास्य साकारतासम्पादने योग्यं प्रयासं कृतवन्तं संस्थानस्य शोध-प्रकाशनविभागस्य सहायकनिदेशकं डा० प्रकाशपाण्डेयं तदनुयायिकार्यकर्तृगणं च साधुवादैः सम्भावयामि। योग्ये काले सुन्दरं पुनर्मुद्रणं विधाय उपकृतवते चौखम्बा-संस्कृतसिरीजआफिस इति मुद्रणालयस्य पतये श्रीब्रजमोहन दास गुप्त महोदयाय साधुवादान् व्याहरामि। आशासे यत् भूयः कृतेन अनेन द्वितीयपुनर्मुद्रणप्रयत्नेन संस्कृतविद्वांसः संस्कृतच्छात्राः संस्कृतप्रेमिणश्च लाभान्विताः प्रेरिताश्च भवेयुः इति।

संस्कृतसेवकः
**वेम्पटिकुटुम्बशास्त्री**
निदेशकः
राष्ट्रिय-संस्कृत-संस्थान, नई दिल्ली

# भूमिकेयम्--

श्रीदत्तो विजयते ।

अयि महाशयाः ! विदितमेवैतच्छ्रीमताम् यत्सकलप्राणिसमभिलषितायामात्यन्तिकदुःखनिवृत्तावात्मतत्त्वसाक्षात्कारस्यैव साधनभावं प्रतिपादयन्ति "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादयः सकलप्रमाणमौलिभूताः श्रुतय इति । तत्र च दर्शनमनूद्य विहितेषु श्रवणमननिदिध्यासनेष्वसंभावनादिसकलधीदोषनिरासफलकं मननमेवाभ्यर्हिततमम् । मननं चेदं सपरिकरैर्हेतुभिरनुमानमेव । तच्चेदमनुमानं यथा चिरन्तनैः कणादगौतमादिभिर्महर्षिभिर्नव्यैश्च गङ्गेशोपाध्यायप्रभृतिभिः कुशाग्रधिषणैर्व्युत्पादितं नैवमन्यैः कैश्चिदपि तन्त्रकारैरित्यत्रान्तरङ्गमेव विदुषां प्रमाणमिति न तदुपन्यासे प्रयोजनं किञ्चिदपि । अयमेव हि न्यायशास्त्रस्यास्य शास्त्रान्तरेभ्यो विशेषो यत्खलु सर्वविचारमूलभूतस्यानुमानयाथात्म्यस्य प्रकाशकत्वं नाम । नहि तादृशमिह जगति किमपि तन्त्रं नाम यदुताधिगतन्यायशास्त्रार्थयाथात्म्यः स्वकीययैव प्रज्ञया समालोचयितुं न शक्नुयात् । अत एवोक्तम्—'काणादं पाणिनीयं च सर्वशास्त्रोपकारक"मित्यनुभवसिद्धार्थबोधकं वचनं कैश्चित् । तत्र पाणिनीयं शास्त्रं पदज्ञानद्वारा यथा सर्वशास्त्रप्रविविक्षुमुपकरोति तथा काणादपदेन विवक्षितं न्यायशास्त्रमपि पदार्थवाक्यार्थानुमानतत्त्वप्रबोधनद्वारा तमुपकरोतीति । तत्राप्यभ्यर्हिततया न्यायशास्त्रस्य श्लोकार्धे तद्वाचककाणादपदस्य प्रथमं प्रवेशः । तच्चेदं सर्वशास्त्रोपकारकं न्यायशास्त्रमनेकसूक्ष्मतरविचारप्रतिपादकग्रन्थसंकुलं महासागरायमाणमालोक्य तत्र प्रविविक्षूणां स्थूलबुद्धीनां प्रवेशाय न्यायवैशेषिकशास्त्रपदार्थप्रतिपादनद्वारा प्रवेशयोग्यतापादकबुद्धिसौक्ष्म्यतामाधातुं राजीवतत्सदृशास्मदादिवशंवदः श्रीमान् विश्वनाथन्याय-

पञ्चाननभट्टाचार्यः संक्षेपतोऽनेकार्थाभिधायिनीं भाषापरिच्छेदापराभिधानां कारिकावली प्रणिनाय । अस्याश्च बह्वर्थसूचकाल्पपदयुततया सूत्ररूपतामनन्यसाधारणतां चाकलय्य तत एव स्वाभिमतसकलार्थप्रकाशनाय तद्भाष्यकल्पां मुक्तावल्यभिधानां तट्टीकामपि स्वयमेव निर्माय कारिकावल्याख्यसूत्रसहितां तां मुक्तावली "यत्करोषी"त्यादिभगवद्गीतावचनानुसारेण विष्णोर्वक्षसि समर्प्य शुभाशुभफलं कर्मबन्धं विमुच्य च स कृतकृत्यो बभूव । मुक्तावली चेयं तत्त्वचिन्तामण्याद्दतया नवीनया विचारशैल्या पदार्थान् प्रतिपादयन्ती व्याख्यानमन्तरेण नैव मन्दमतीनामन्तेवासिनां तादृगुपकारायेति विचार्य भारद्वाजकुलाम्बुधिपूर्णचन्द्रो बालकृष्णभट्टात्मजः श्रीमान् महादेवभट्टस्तां व्याख्यातुमारेभे । परंतु नानेन सा संपूर्णतया व्याख्याता । किंतु शब्दखण्डान्तमेवेति तावत्पर्यन्तमेवोपलब्धया रामरुद्रया वाराणस्यां प्रचलितया तादृश्या किंवदन्त्या चावगम्यते । मनोनिरूपणमारभ्याऽऽसमाप्ति पुनरस्या व्याख्यानं महादेवभट्टात्मजो दिनकरभट्ट एव स्वपित्राज्ञानुसारेण चकारेति "भानुं प्रणम्य परिभाव्य च शास्त्रसारं मुक्तावलीकिरण एष पितृप्रदिष्टः । सद्युक्तिभिर्दिनकरेण करेण सोऽयं नीतः प्रकाशपदवीं सुधियां मुदेऽस्तु" इति ग्रन्थान्ते परिदृश्यमानश्लोकात् "इति श्रीमहादेवभट्टतनूजदिनकरभट्टविरचिते" इतिवाक्याच्चावगम्यते । अतो "दिनकरभट्टो दिनकरीं प्रणिनाय । अस्य पिता बालकृष्णभट्ट" इति केषांचिद्वाक्यमाद्यन्तश्लोकानालोचनमूलकभ्रान्तिजन्यमेवेति प्रतिभाति । अस्याश्च मुक्तावलीप्रकाशापराभिधानाया दिनकर्या अतिगूढार्थायाः काठिन्यमवलोक्य महापण्डितेन रामरुद्रभट्टेन रामरुद्रीति स्वनामाङ्किता व्याख्या निरमायि । साचेयं कारिकावली मुक्तावली-दिनकरी-रामरुद्रीसहिता पूर्वं निर्णयसागरयंत्रालये मुद्रिताऽपि शब्दखण्डीयरामरुद्रीरहिता शोधकाद्यनवधानादिनाऽशुद्धिबहुला विद्यार्थिनामध्ययनाय नालं बभूवेति तामिमां त्रुटिं परिजिहीर्षुभिः शुद्धपुस्तकनिर्माणे बद्धपरिकरैः सकलमुद्रायन्त्रादर्शभूतनिर्णयसागरयंत्रालयाधिपतिभिर्वेदशास्त्रसंपन्नानां स्वकीयप्रधान-

पण्डितानां पणशीकरोपाह्ववासुदेवशास्त्रिणामनुमत्या शुद्धपुस्तक-निर्माणरूपेऽस्मिन् कार्ये नियुक्तोऽहम्। मया च बालमनोरमामुद्राक्षर-शालायां मुद्रितमेकं चौखम्बासंस्कृतसीरीजयंत्रे मुद्रितमपरं चेति पुस्तकद्वयं संगृह्य यावद्बुद्धिबलोदयं च सावधानतया समालोच्य शब्दखण्डीयरामरुद्रीं चात्र निवेश्य प्रभादिटीकातः काश्चनात्या-वश्यकीभूताष्टिप्पणिकाश्चात्र संयोज्यानुपयुक्ता आमिकाश्च पूर्व-पुस्तकस्थास्ता निष्कास्य महता परिश्रमेण यथेदं पुस्तकं शुद्धं विद्यार्थि-नामुपयोगि च स्यात्तथा प्रयतितम्। एवं कृतेऽप्यत्र मेऽनवधानतः सीसकाक्षरयोजकदोषेण वा मन्मतिमान्द्याद्वा यदि किंचिदशुद्धम-वशिष्टं समुपलभ्येत तदा तत्क्षन्तुमर्हन्त्येव गुणैकपक्षपातिनः सुधिय इति शिवम्।

भवदीयः
महामहोपाध्याय-
श्रीमद्रामाचरणभट्टाचार्यचरणान्तेवासी–
**आत्मारामशर्मा**

# विषयानुक्रमणिका

श्रीः ।

# सिद्धान्तमुक्तावली ।

## दिनकरी-रामरुद्रीभ्यां संवलिता ।

### प्रत्यक्षखण्डम् ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।[1]
भवो[2] भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

दिनकरी ।

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं
भारद्वाजकुलाम्बुधौ विधुमिव श्रीगौरवाख्याम्बुजात् ।
ज्ञात्वाऽशेषमतं मितेन वचसा सिद्धान्तमुक्तावली-
गूढार्थांस्तनुते यथामति महादेवः परेषां कृते ॥ १ ॥

तत्र तावद्भाषापरिच्छेदव्याख्यानं चिकीर्षुर्विश्वनाथपञ्चाननो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमङ्गलस्य शिष्या अप्येवं कुर्युरिति शिष्यशिक्षायै निबन्धनं कुर्वन्नीश्वरं प्रार्थयते—**चूडामणी-**

रामरुद्री ।

तातस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणे प्रणम्य ।
श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात्किमपि कौतुकमातनोति ॥ १ ॥
जाने कदाचिदपि नैव शिवस्वरूपात्तातात्पुनः परमदैवतमन्यदत्र ।
तस्मादिमां कृतिमिहाद्य तरङ्गिणीत्वात्पाद्याय तच्चरणयोः परिकल्पयामि ॥ २ ॥
तरङ्गिणीयं सफलोक्तिवाचा मुदे बुधानां तरसा विदे च ।
भूयात्सदालं निखिलाण्डभाण्डकीर्तिप्रभाजातविभूषितानाम् ॥ ३ ॥

सिद्धान्तमुक्तावलीव्याख्यां चिकीर्षुर्महादेवः प्रारिप्सितग्रन्थविघ्नविघाताय कृतं तातनमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति—**लक्ष्मीति** । गूढार्थांस्तनुते विस्तारयतीत्यर्थः । अर्थस्य विस्तारो नाम नानाजनसंबन्धः । स च संबन्धः प्रकृते स्वविषयकज्ञान[3]वत्त्वमेवेति भावः । तत्रतावदिति । निपातो वाक्यालङ्कारे । **शिष्या अप्येवं कुर्युरितीति** । अत्रेतिशब्दस्य उक्ताकारकाभिप्रायोऽर्थः ।

---

१ अभूततद्भावे च्विः. २ भवति जगदस्मात्. ३ तथाच गूढार्थविषयकज्ञानजनकव्यापारवानित्यर्थः.

दिनकरी ।

**कृतेति । लीलेति । इदं च विशेष्यं नातः समाप्तपुनरात्तत्वदोषः । वस्तुतस्तु विधोः किमिति चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्याकाङ्क्षायां निराकाङ्क्षप्रतिपत्तिर्न संभवतीति लीलेत्यादिविशेषणानुक्तौ विवक्षितान्वयबोधाभावान्नायमत्र दोषः । उत्थाप्याका-**

रामरुद्री ।

इतिशब्दस्याव्ययतया तृतीयान्तत्वेन शिष्या अप्येवं कुर्युरित्याकारकाभिप्रायेणेत्यर्थः पर्यवसितः । एतेन शिष्या अप्येवं कुर्युरित्याकारकज्ञानेच्छाशब्दानां शिष्यशिक्षानात्मकतया कुर्युरिति शिष्यशिक्षायै इति ग्रन्थासङ्गतिः स्वकर्तव्यत्वेन ज्ञानस्यैव शिक्षाशब्दार्थत्वादिति निरस्तम् । **समाप्तपुनरात्तत्वमिति ।** क्रियान्वयेन शान्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानं समाप्तपुनरात्तत्वं काव्यदोषः । प्रकृते हि 'चूडामणीकृतविधुर्वलयीकृतवासुकिः । भवो भवतु भव्याय लीलाताण्डवपण्डितः' इत्यत्र भवो भव्याय भवत्वित्येतावतान्वयबोधेनैव भवपदस्य शान्ताकाङ्क्षतया उत्तरत्र विद्यमान 'लीलाताण्डवपण्डित' इतिविशेषणस्यान्वयार्थं स भवः पुनः कीदृश इत्याकाङ्क्षासंपादनाय भवपदेन भवस्मरणस्यावश्यकतया भवति समाप्तपुनरात्तत्वं दोष इति भावः ॥ **ननु** जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकमिति नियमः । अन्यथा नीलोत्पलमित्यादिवदुत्पलनीलमित्यादेरपि प्रयोगस्य प्रसङ्गात् । तथाहि समासविधायकसूत्रे यत्प्रथमान्तपदनिर्दिष्टं तत्समासे पूर्वं निपततीति नियमः । 'विशेषणं विशेष्येणे'ति कर्मधारयविधायकसूत्रे विशेषणवाचकपदस्य प्रथमान्तपदनिर्दिष्टत्वात्पूर्वनिपातनियमः । नीलोत्पलयोर्विशेषणविशेष्यभावे नियामकाभावे । उत्पलस्य विशेषणत्वविवक्षया उत्पलनीलमिति प्रयोगः स्यादेव, तस्माज्जातिप्रवृत्तिनिमित्तकत्वादुत्पलपदस्य विशेष्यवाचकत्वमेवेत्यवश्यमङ्गीकरणीयम्, तथाच शिवशरीरवृत्तिजातिविशेषप्रवृत्तिनिमित्तकस्य भवशब्दस्य विशेषणपरत्वानुपपत्तिः । नच भवः सर्वं जानातीति प्रतीत्यनुपपत्तिः अवच्छेदकतासंबन्धेन ज्ञानवत्त्वबोधकत्वस्येश्वरज्ञानस्य किंचिदनवच्छिन्नत्वेन स्वीकर्तुमशक्यत्वादिति वाच्यम् । स्वाश्रयावच्छिन्नत्वसंबन्धेन तादृशवैजात्यविशिष्टचेतनस्यैव भवपदार्थत्वोपगमात् । स्वाश्रयावच्छिन्नत्वं च स्वनिष्ठकर्मासाधारणकारणयत्नवत्त्वसंबन्धेन स्वाश्रयविशिष्टत्वमिति बोध्यम् । नचैकव्यक्तिकत्वाद्भवत्वं न जातिरिति वाच्यम् । कल्पभेदेन शिवशरीरस्यापि भिन्नत्वात् । नच भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कारणत्वमेव भवपदप्रवृत्तिनिमित्तं नतु जातिविशेष इति वाच्यम् । योगाद्रूढेर्बलीयस्त्वादित्यभियुक्तोक्त्या शीघ्रोपस्थितिकरूढ्यर्थमादाय शान्ताकाङ्क्षान्वयबोधोपपत्तौ विलम्बोपस्थितिकयोगार्थमादायान्वयबोधानुपादाने समाप्तपुनरात्तत्वदोषस्यावश्यकत्वादित्यत आह—**वस्तुतस्त्विति । इत्याकाङ्क्षायामिति ।** सत्यामिति शेषः । **निराकाङ्क्षप्रतिपत्तिर्न संभवतीति ।** स्वोत्तरानुत्पन्नाकाङ्क्षकशाब्दबोधो न भवतीत्यर्थः । **विवक्षितान्वयबोधेति ।** विशेष्यवाचकपदेन

१ स्वं तादृशवैजात्याश्रयशरीरम् ।

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

दिनकरी।

ङ्क्षया विशेषणान्वय एव तत्प्रसरादिति। लीलया ताण्डवं नृत्यं तत्र पण्डितोऽभिज्ञ इत्यर्थः। अनेन च नृत्यविशिष्टतया स्मृतिविषयत्वात्प्रार्थिता अर्था भवन्त्येवेति सूचितम्। ननु आभूषणरहितस्य कथं नृत्यं तत्राह—**चूडामणीकृतेति**। अचूडामणिः चूडामणिवत्संपद्यमान इति चूडामणीकृतः चूडामणीकृतो विधुर्येन स तथेत्यर्थः। **वलयीकृतेति**। अवलयं वलयं संपद्यते इति वलयीकृतः वलयीकृतो वासुकिर्येन स तथेत्यर्थः ॥ १ ॥

शिष्यावधानाय प्रतिजानीते—**निजनिर्मितेति**। निजेन स्वेन

रामरुद्री।

निरुक्तनिराकाङ्क्षान्वयबोधजननोत्तरं विशेषणान्तरान्वयार्थं विशेष्यवाचकपदस्य पुनरनुसंधानं समाप्तपुनरात्तत्वमिति समाप्तपुनरात्तत्वलक्षणघटकत्वेन विवक्षितो यो निराकाङ्क्षान्वयबोधस्तदभावादित्यर्थः। लीलेत्यादिविशेषणानुक्तावित्यनेन तादृशविशेषणोक्तौ तादृशविशेषणसहितेतरवाक्यजन्यान्वयबोध एव विवक्षितान्वयबोधो भवतीति सूचितम्। **नन्वेवं** समाप्तपुनरात्तत्वं क्वापि दोषो न स्यात्। शाब्दबोधमात्रे आकाङ्क्षायाः प्रयोजकत्वेन विशेषणान्तरान्वयार्थं स कीदृश इत्यादि यत्किंचिदाकाङ्क्षायाः कल्पनीयतया क्वापि निराकाङ्क्षप्रतिपत्तेरसंभवादित्यत आह—**उत्थाप्याकाङ्क्षयेति**। अनियताकाङ्क्षयेत्यर्थः। क्रियाकारकपदानां परस्पराकाङ्क्षा नियता पुत्रादिपदानामपि प्रतियोग्याकाङ्क्षा नियता एवं प्रयोजनाकाङ्क्षापि नियतैव प्रयोजनाभावे वाक्यार्थस्यैवासिद्धिप्रसङ्गात्। भवः कीदृश इत्याद्याकाङ्क्षा तु न नियता। तथाच नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसंधानमेव समाप्तपुनरात्तत्वमिति विवक्षितत्वात् स कीदृश इत्याद्युत्थाप्याकाङ्क्षया विशेषणान्तरान्वयस्थल एव समाप्तपुनरात्तत्वदोष इति भावः। **अच्चूडामणिरिति**। 'च्विः स्यादभूततद्भावे' इत्यनेन विहितच्विप्रत्ययान्तचूडामणिशब्दघटितादुक्तवाक्यादयमर्थो लभ्यत इति भावः ॥ १ ॥

**शिष्यावधानायेति**। शिष्याणामवधानं शुश्रूषा तस्यै इत्यर्थः। वक्तव्यार्थस्य विशिष्याज्ञाने तत्प्रतिपत्तेरिष्टसाधनत्वाग्रहेण शिष्याणां वाक्यश्रवणेच्छा न संभवति प्रतिज्ञया स्वकारिकावलीव्याख्यानस्य कर्तव्यत्वज्ञाने कारिकावल्यर्थज्ञानरूपेष्टसाधनत्वस्य

---

१ स्पष्टां करवाणि. २ कौतुकात् उत्साहात्. ३ नृत्यविशिष्टत्वप्रकारकस्मृतिविषयत्वादित्यर्थः.

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।

दिनकरी ।

निर्मिता रचिता[1] या कारिकावली तां अति अत्यन्तं संक्षेपः शब्दसंक्षेपो यासु ताः अतिसंक्षिप्तास्तादृश्यश्च ताश्चिरन्तनानां कणादप्रभृतीनां या उक्तयो वचांसि वचःप्रतिपाद्या युक्तयस्ताभिरहं विशदीकरवाणि प्रकटीकरोमीत्यर्थः । **ननु** लीलावत्यादिप्राचीननिबन्धाध्ययनेनैव कारिकावलीप्रतिपादितोऽर्थो बोद्धव्य इति किमनेन भवत्कृतविशदनिबन्धेनेत्यत आह—**अतिसंक्षिप्तेति** । तथाच लीलावत्यादिप्राचीननिबन्धेषु ग्रन्थबाहुल्येन बहुतरदुःखहेतुप्रतिपत्तिकतया न बालानां प्रवृत्तिरिति भावः । स्वोत्प्रेक्षामूलकताप्रयुक्तानादरणीयतां निरसितुं चिरन्तनेत्युक्तम् । नन्वित्यवधारणे । तथाच कौतुकादेवेत्यर्थः । एतेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः । स्वस्य ग्रन्थकरणे प्रवृत्तौ निमित्तमाह[2]—**राजीवेति** । राजीवे शिष्ये या दया कृपा तया वशंवदस्तदधीन इत्यर्थः ॥ २ ॥

**ननु** ग्रन्थादौ श्रोतृप्रवृत्तये प्रयोजनादि वक्तव्यं भवति तस्य चेहानुक्तत्वादुपेक्षणीयतैतद्ग्रन्थस्य स्यादित्याशङ्क्य विषयप्रयोजनसंबन्धाधिकारिणः सूचयन्नतिसंक्षिप्तत्वादेतद्ग्रन्थस्य सकलपदार्थाप्रतिपादकतया कथं बालव्युत्पत्तिरित्याशङ्कां चैतद्ग्रन्थस्य सकलपदार्थप्रतिपादकत्वप्रदर्शनेन[3] परिहरन् "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण"मिति भगवदुक्तेर्मुक्ता-

रामरुद्री ।

ग्रन्थकृद्वाक्येषु सुग्रहत्वेन भवत्येव तच्छ्रवणेच्छेति भावः । **शब्दसंक्षेप इति** । संक्षेपो द्विविधः शब्दसंक्षेपोऽर्थसंक्षेपश्च । तत्रार्थसंक्षेपेण ग्रन्थस्य सकलार्थाप्रतिपादकत्वे बालव्युत्पत्तिजनकता न स्यादित्याशङ्क्य संक्षेपपदस्य प्रकृते शब्दसंक्षेपमात्रपरत्वमुपदर्शितमितिपद्यस्यातिसंक्षिप्तपदस्य प्रयोजनं प्रकटयन्नाह—**नन्वित्यादि** । **स्वोत्प्रेक्षेति** । स्वकीयकल्पनामूलकत्वेत्यर्थः । **एतेन** अवधारणेन ॥ २ ॥

---

१ स्वकर्तृकरचनाकर्मीभूतेत्यर्थः. २ निमित्तज्ञानजनकशब्दानुकूलकृतिमानित्यर्थः. ३ प्रदर्शनप्रयोज्यपरिहारकर्ता.

विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

दिनकरी ।

वलीसमं स्वकीयग्रन्थं भगवति चार्पयन् स्वकीर्त्यनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्नाति—**सद्रव्येति** । द्रव्यैः सहिता युक्ता प्रतिपादकतया, गुणैरपि गुम्फिता युक्ता । सतामुत्क्षेपणादीनां पञ्चानां कर्मणां ज्ञापिका बोधिका । सत् जातिरूपं सामान्यं, विशेषाः, नित्यः समवायस्तैर्मिलिता, यद्वा सन्ति सामान्यविशेषनित्यमिलितानि यस्यां सा, नित्यमिलितं नित्यसंबन्धः । अभावप्रकर्षः प्रागभावादिभेदेन वैलक्षण्यं, तस्य उज्ज्वला प्रकाशिका । एषा बुद्धिस्था । सिद्धान्ता एव मुक्तास्तासां आवली पङ्क्तिः विष्णोर्नारायणस्य वक्षसि वक्षस्थले, विन्यस्ता विशेषतोर्पिता, सुकृतिनां पण्डितानां मनसः मुदं संतोषं चिरं बहुकालं वितनुतां विस्तारयत्वित्यर्थः । **ननु** युक्तीनामत्रास-त्वात्कथं विदुषां संतोषस्तत्राह—**सद्युक्तिरिति** । सत्यः युक्तयो यस्यां सा तथा । मुक्तावलीसादृश्यं ग्रन्थे द्रव्यादिपदार्थवत्तया, यथाहि मुक्तावली सद्रव्या साध्यतया द्रव्यवती द्रव्यसाध्येति यावत् । नानाविधद्रव्यघटिता वा । गुणेन सूत्रेण गुम्फिता निर्मिता । सुकृतिनां पुण्यवतां यानि सन्ति समीचीनानि भगवद्भजनादिरू[2]-पाणि कर्माणि तेषां बोधिका । सत्सामान्यं समीचीना जातिः विशेषो महत्त्वनिर्मलत्वादिस्ताभ्यां नित्यमनवरतं मिलिता संबद्धा । अभावे तेजोभावेऽन्धकारे सति प्रकर्षेणोज्ज्वला अर्थप्रकाशिकेति यावत् । यथा मुक्तावली द्रव्यादिसकलपदार्थवती तथायं ग्रन्थोऽपीति ।

रामरुद्री ।

**सत् जातिरूपमिति** । सामान्यमनुगतधर्ममात्रं, तच्च क्वचिदुपाधिरूपं क्वचि-ज्जातिरूपं, प्रकृतग्रन्थे जातिरूपसामान्यस्यैव निरूपणीयत्वेन जातिरूपसामान्यलाभाय सत्सामान्येत्युक्तमिति भावः । **ननु** सदित्यस्य सत्ताविशिष्टार्थकत्वेन सत्पदस्य जातिरूपा-र्थकत्वं लक्षणयैव वाच्यम् । सामान्यपदमपि शास्त्रकृतपरिभाषया जातिरूपसामान्य एव

---

१ पण्डितेन. २ आदिना स्वकर्मानुष्ठानम्. ३ इदं समानानां भावः सामा-न्यमिति ग्रन्थाभिप्रायेण ।

**नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।**

**विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—नूतनेति ।**

**दिनकरी ।**

अत्रच मुक्तावलीत्त्रोक्त्या निर्दोषत्वं सूचितम् । अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो विषया उक्ताः । पदार्थतत्त्वावधारणं च प्रयोजनं सूचितम् । संबन्धश्च प्रतिपाद्यप्रतिपादकभावः । पदार्थतत्त्वावधारणकामोऽधिकारीति ॥ ३ ॥

ग्रन्थारम्भसमये कृतस्य मङ्गलस्य तन्निबन्धस्य च वैयर्थ्यमाशङ्क्य फलं दर्शयति—**विघ्नविघातायेति** । प्रारब्धुमिष्टस्य ग्रन्थस्येति शेषः । यद्यप्यत्र घातपदस्योत्पत्तिमदभावपरतया विपदमनर्थकमिति प्रतिभाति तथापि विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायाः 'स कीचकैर्मारुतपूर्णरन्ध्रै'रित्यत्र 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता' इति कोशान्मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद्घातपद-

**रामरुद्री ।**

सुप्रसिद्धम् । अन्यथा सामान्यं सविशेषकमिति मूलेऽपि जात्यतिरिक्तसामान्यव्यावर्तकविशेषणानुक्त्या मूलकारस्य न्यूनतापत्तेः सदित्यनर्थकं चेत्यत आह—**यद्वेति** ॥३॥

**विपदमनर्थकमितीति** । इदं चोपसर्गाणां वाचकत्वमताभिप्रायेण, अन्यथा तेषां द्योतकत्वपक्षे किंचिदर्थावाचकतया उपसर्गाणां शक्तत्वरूपपदत्वासंभवेन विपदमित्यसङ्गतमेव स्यात् । अतएव समाधानेऽपि विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति न्यायेन विपदसंनिहितघातपदस्य अभावमात्रपरताप्रदर्शनमपि संगच्छते । अन्यथा विपदस्य किंचिदर्थावाचकत्वेन विशेषणवाचकत्वासंभवात् विघातपदस्योक्तन्यायविषयता न स्यादिति ध्येयम् । विशिष्टवाचकपदस्यापि विशेषणबोधकत्वरूपविशेषणवाचकत्वस्याप्यक्षततया तेषां क्वापि विशिष्टवाचकता न स्यादित्यतः पृथगित्युक्तं । विशिष्टवाचकपदातिरिक्तमित्यर्थः । **ननु** विघ्नविघाताय कृतं मङ्गलमिति मूलेन मङ्गले विघ्नध्वंसजनकत्वस्यैव सूचितत्वेन[3] तदुपरि नन्वित्यादिमूलेन विघ्नध्वंसं प्रति मङ्गलं न कारणमित्याशङ्का यद्यपि युज्यते तथापि नवा समाप्तिं प्रति कारणमित्युक्तिरसंगतेत्यतस्तद्ग्रन्थमभिप्रायान्तरेणावतार-

---

१ गोपानां वधूट्यः स्त्रियः तासां दुकूलानां चौरायापहर्त्रे. २ विशिष्टवाचकानां पदानामिति न्यायविषयता. ३ तद्बोधकचतुर्थीघटितत्वादिति भावः.

ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनापि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शना-

दिनकरी।

मभावमात्रपरं द्रष्टव्यम्॥ ननु निष्फलत्वान्मङ्गलाचरणमयुक्तम्, नच निष्फलत्वमेवासिद्धं तस्य फलविशेषशून्यत्वहेतुना साधना-दित्यभिप्रायेणाशङ्कते—नन्विति। मङ्गलस्य कारणत्वाभावे व्यति-रेकव्यभिचाररूपहेतुमाह—विनापीति। निर्विघ्नपरिसमाप्तीति। विघ्नध्वंसपूर्वकसमाप्तीत्यर्थः। नच तत्र जन्मान्तरीयमङ्गलकल्पनान्न व्यभिचार इति वाच्यम्, भोगादिनापि नास्तिकात्मनि विघ्ननाश-

रामरुद्री।

यति—ननु निष्फलत्वादिति। फलविशेषशून्यत्वहेतुनेति। यद्यपि ज्योतिष्टोमादावपि पुत्रादिरूपफलविशेषशून्यत्वेन फलविशेषशून्यत्वं न निष्फलत्व-व्याप्यं तथापि तत्पदेन यावत्फलविशेषशून्यत्वस्य विवक्षितत्वात् यावद्विशेषाभावस्य च सामान्याभावव्याप्यत्वान्नोक्तासंगतिरिति भावः। नचैवं निष्फलत्वसिद्धये याव-त्फलविशेषशून्यत्वमेव साधनीयं मूले तु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणमित्यनेन फलद्वयशून्यत्वमेव साध्यते तेन च न यावत्फलविशेषशून्यत्व-रूपहेतुसिद्धिरिति कथं प्रकृतोपयोग इति वाच्यम्। पशुपुत्रादिफलशून्यत्वस्य मङ्गले सर्वसंमतत्वेन तस्य साधनानर्हतया प्राचीननवीनाभ्यां समाप्तिविघ्नध्वंसयोरेव फल-त्वाङ्गीकारेण तदुभयफलशून्यत्वसाधने यावत्फलविशेषशून्यत्वरूपहेतुसिद्धेरावश्यकत्वा-दिति भावः। नचैवमपि प्राचीनैः मङ्गलस्य समाप्तिं प्रति विघ्नध्वंसद्वारैव कारणत्वाङ्गी-कारात् मङ्गलस्य विघ्नध्वंसं प्रत्यकारणत्वे समाप्तिं प्रत्यपि विघ्नध्वंसद्वारा कारणत्वमसं-भवदुक्तिकमेवेति पृथक्समाप्तिकारणत्वनिषेधो व्यर्थ एवेति वाच्यम्। यतो हि विघ्न-ध्वंसद्वारैव समाप्तिं प्रति मङ्गलस्य प्राचीनैः सर्वत्र कारणत्वोपगमे विघ्नध्वंसो मङ्ग-लफलमिति वादिनो नवीनस्य मते, न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्येत्यादिना विघ्नात्यन्ताभाववता कृतस्य मङ्गलस्य निष्फलत्वापत्तिः प्राचीनैः कर्तुमशक्या, स्वमतेपि तत्र विघ्नध्वंसरूपद्वाराभावेन मङ्गले निष्फलत्वस्यैवाङ्गीकरणीयत्वात्, तथाच प्राचीना-नामपूर्वद्वारैव मङ्गलस्य समाप्तिहेतुता संमतेति न कश्चिद्दोष इति भावः। नचैवं विघ्न-ध्वंसस्तु मङ्गलस्य द्वारमिति प्राचीनोक्तिविरोध इति वाच्यम्। द्वारत्वं हि तज्जन्यत्वे सति तज्जन्यजनकत्वं, तच्चापूर्वद्वारा मङ्गलस्य समाप्तिहेतुत्वेपि मङ्गलजन्यसमाप्तिं प्रति विघ्नध्वंसस्य प्रतिबन्धकसंसर्गाभावविधया कारणत्वेन विघ्नध्वंसस्य मङ्गलजन्यत्वेन च संभवत्येवेति, मङ्गलस्यापूर्वद्वारा समाप्तिकारणत्वेऽपि विघ्नध्वंसस्य द्वारतासंभ-

१ व्यतिरेकव्यभिचारमुद्भावयति–नन्विति. २ हेतुत्वात्. ३ कार्यत्वावच्छिन्नं प्रति प्रतिबन्धकात्यन्ताभावः कारणमिति भावः.

दिनकरी।

संभवेन जन्मान्तरीयमङ्गलसंदेहेन व्यभिचारसंशयसंभवात्। अत्र कादम्बर्यादिग्रन्थे मङ्गलसत्वेऽपि समाप्तेरदर्शनेनान्वयव्यभिचारोपि दोषो बोध्यः। व्यभिचारसंदेहस्य ग्राह्यसंशयरूपतया कारणताप्रत्यक्ष एव प्रतिबन्धकत्वं नत्वनुमितौ तत्र तस्यानुकूलत्वादित्यभिप्रायवान् मङ्गलं समाप्तिफलकं समाप्त्यन्या[१]फलकत्वे सति सफलत्वादिति परि[२]शेषानुमानेन मङ्गलस्य समाप्तिफलकतां व्यवस्थापयिष्यन् प्रथ-

रामरुद्री।

वात्। नचैवमपि अपूर्वस्य द्वारतामते स्वजन्यापूर्वसंबन्धेनैव मङ्गलस्य हेतुताया वक्तव्यतया स्वजन्यविघ्नध्वंसवत्त्वसंबन्धेन मङ्गलस्य कारणताप्रतिपादनं मुक्तावलीव्याख्यानकृतामसंगतमेवेति वाच्यम्। यत्र मङ्गलजन्यविघ्नध्वंसो वर्तते तत्रानन्तस्थलेषु नानापूर्वव्यक्तीनां कल्पने गौरवात् तादृशस्थले स्वजन्यविघ्नध्वंसवत्त्वसंबन्धेनैव मङ्गलस्य समाप्तिहेतुता युक्तेत्यभिप्रायकतया तदुक्तिसङ्गतेः। नचैवमपि समाप्तिं प्रति मङ्गलस्य क्वचित्स्वजन्यविघ्नध्वंससंबन्धेन हेतुता क्वचित्स्वजन्यापूर्वसंबन्धेनेत्यायातं, तथाच पृथक्समाप्तिकारणत्वनिषेधस्यावश्यकत्वेऽपि यत्र स्वजन्यापूर्वसंबन्धेन मङ्गलं न तत्र स्वजन्यविघ्नध्वंससंबन्धेन, यत्र च स्वजन्यविघ्नध्वंससंबन्धेन मङ्गलं न तत्र स्वजन्यापूर्वसंबन्धेनेति समाप्तौ मङ्गलस्य संबन्धद्वयेनापि व्यतिरेकव्यभिचारात्कारणत्वमेवासंभवदुक्तिकमिति वाच्यम्। तत्तत्संबन्धेन मङ्गलाव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटिप्रविष्टतया व्यभिचाराभावादिति हृदयम्। **ननु** व्यतिरेकव्यभिचाररूपहेतुना समाप्तेः कारणत्वाभावस्य मङ्गले पूर्वपक्षिणा साधनात् समाप्त्यन्याफलकत्वे सति सफलत्वहेतुना मङ्गले समाप्तिकारणत्वानुमानं सिद्धान्तिनामसङ्गतं, समाप्तिकारणत्वाभावसाधके हेतौ हेत्वाभासमनुद्भाव्य समाप्तिकारणत्वानुमानस्य सत्प्रतिपक्षत्वापत्तेरित्यतः सिद्धान्तग्रन्थस्य भावमाह—**व्यभिचारसंदेहस्येति**। मङ्गलत्वधर्मिकसमाप्तिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसंदेहस्येत्यर्थः। **ग्राह्यसंशयरूपतयेति**। अनुमित्या ग्राह्यं हि मङ्गले समाप्तिकारणत्वं तच्च समाप्तिमन्निष्ठाभावप्रतियोगितानवच्छेदकमङ्गलत्ववत्त्वं, तथाच साध्यसंदेहपर्यवसन्नस्य व्यभिचारसंदेहस्य नानुमितौ प्रतिबन्धकत्वमिति भावः। **कारणताप्रत्यक्ष एव प्रतिबन्धकत्वमिति**। विशेषदर्शनाभावविशिष्टतत्संशयः प्रात्यक्षिकनिश्चयप्रतिबन्धक इति मताभिप्रायेणोक्तम्। वस्तुतस्तु संशयसामग्र्या एव निश्चयप्रतिबन्धकत्वम्, अतएव विशेषदर्शनदशायामेककोटिभानप्रतिबन्धेन संशयसामग्र्यभावान्निश्चय इति मन्तव्यम्। **तत्र तस्येति**। अनुमितौ साध्यसंशयस्येत्यर्थः। **अनुकूलत्वादिति**। सिद्ध्यभावरूपपक्षतासंपादकत्वादिति भावः। **परिशेषानुमानेनेति**। तदितरविशेषाभाव-

---

१ सत्यन्तानुपादाने दर्शे पितृतृप्तिरूपफलमादाय अतिव्याप्तिः विशेष्यानुपादाने निष्फलजलताडनेऽतिव्याप्तिः. २ मङ्गलं सफलमित्यनुमित्या.

दिति चेन्न । अविगीतशिष्टाचारविषयत्वेन मङ्गलस्यसफलत्वे सिद्धे तत्र फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्प-

दिनकरी ।

मतो विशेष्यासिद्धिनिरासाय फलवत्तां साधयति—**अविगीतेति** । विषयत्वं च ज्ञानविषयसुखेऽतिप्रसक्तमतः—**आचारेति** । आचारश्चात्र यद्यपि क्रियैव तथापि विषयत्वश्रुतेः कृतिरेव विवक्षिता तद्विषयत्वं च विधेयतया बोध्यं । तेन फले न व्यभिचारः तस्योद्देश्यतया कृतिविषयत्वात् । विधेयतया कृतिविषयत्वं चैत्यवन्दनादावप्यस्त्यतः—**शिष्टेति** । शिष्टत्वं च फलसाधनतांशे भ्रान्तिरहितत्वं नतु वेदप्रामाण्याभ्युपगन्तृत्वं, तेन व्युत्क्रमेण कृते दर्शादौ निष्फलत्वेऽपि न व्यभिचारः । शिष्टाचारविषयत्वं श्येनयागादावप्यस्त्यतोऽ**विगीतेति** । अविगीतत्वं च बलवदनिष्टाननुबन्धित्वं, तेन श्येनादौ प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसाध्याभावेऽपि न व्यभिचारः । **सिद्धे** अनुमिते । **तत्र** मङ्गले । **फलजिज्ञासायां** विशेषतः फलजिज्ञासायाम् । ननु कथं तर्हि गङ्गास्नानादीनामदृष्टार्थकतेत्यत आह—**संभवतीति** । तथाच तत्र दृष्टासंभवेनादृष्टकल्पनेति

रामरुद्री ।

वत्वे सति सामान्यवत्त्वरूपो हेतुः परिशेषानुमानम् । **आचारश्चात्रेति** । अत्रेतिशब्दश्चोत्तरान्वयी, तथाच आचारो यद्यपि क्रियैव तथाप्यत्र विषयत्वश्रुतेः कृतिरेव विवक्षितेत्यर्थः । **ननु** श्येनयागस्यापि शत्रुवधरूपेष्टसाधनत्वात्सफलत्वमक्षतमेवातस्तत्र हेतुसत्वेपि न व्यभिचार इति हेतावविगीतत्वविशेषणं व्यर्थमित्याशङ्कां निराकर्तुमविगीतपदाभावे व्यभिचारमुपपादयन्नाह—**तेनेत्यादि** । **प्रवृत्त्युपयुक्तेति** । मङ्गलाचरणे प्रवृत्तिनिर्वाहाय बलवदनिष्टाननुबन्धीष्टसाधनत्वरूपसफलत्वमेवानुमेयं तच्च श्येने नास्त्येवेति हेतावविगीतपदाभावे भवत्येव व्यभिचार इति भावः । अनिष्टे बलवत्त्वं च इष्टोत्पत्तिनान्तरीयकभिन्नत्वम् । अनिष्टे बलवत्त्वविशेषणात् बहुवित्तव्ययायाससाध्ययागादौ न प्रवृत्त्यनुपपत्तिः । यद्यपि जलताडनादेरपि 'न कुर्यान्निष्फलं कर्मे'त्यादिना निषिद्धतया तदनुकूलकृतेरपि नरकरूपबलवदनिष्टजनकतयाऽविगीताचारविषयत्वं सफलकर्मण्येवेति शिष्टपदमनर्थकं तथापि पश्वादिकृतनृथाचेष्टायां व्यभिचारवारकतया शिष्टपदसार्थक्यमेव विधिनिषेधयोर्नराधिकारिकत्वेन तदी-

---

१ अनुमानं तु मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वादिति.

२ फलत्वव्याप्यधर्मपुरस्कारेण.

नाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते।

दिनकरी ।

भावः । **ननु** तर्हि विश्वजिन्न्यायात्स्वर्ग एवेष्टं कल्प्यतामत आह—**उपस्थितत्वादिति।** आरब्धं कर्म मे निर्विघ्नं परिसमाप्यतामिति ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेन परिशेषानुमाने प्रवर्तमानस्योपस्थितत्वादित्यर्थः । **कल्प्यते** अनुमीयते । अनेन च मङ्गलस्य समाप्तिहेतुत्वेऽनुमानमेव प्रमाणं न तु शिष्टाचारानुमिता श्रुतिरिदानीमानुपूर्वीविशेषनिर्णयाभावेन तस्या अबोधकत्वादिति सूचितम् । व्यापकत्वघटितकारणताग्रहप्रतिबन्धकज्ञानविषयव्यतिरेकव्यभिचारमुद्धरति—**इत्थंचेति।** मङ्गलस्य समाप्तिफलकत्वे सिद्धे चेत्यर्थः । **तत्रापि,** नास्तिकादिग्रन्थेपि । तत्, मङ्गलं । कल्प्यते अनुमीयते, कार्यरूपसमाप्त्येति शेषः । ग्राह्यसंदेहपर्यवसन्नस्य पूर्वोक्तव्यभिचारसंशयस्य

रामरुद्री ।

यत्तृथाचेष्टाया निषेधाविषयत्वेन बलवदनिष्टाजनकत्वादिति भावः । **ननु तर्हीति ।** अदृष्टफलकल्पनाया अन्याय्यत्वे हीत्यर्थः । **विश्वजिन्न्यायादिति ।** काम्यप्रकरणे विश्वजिता यजेतेति विधिः श्रूयते काम्यप्रकरणपठितत्वेन तस्य नित्यत्वाभावात् प्रत्यवायपरिहारफलस्याप्यभावात् प्रवृत्त्यर्थं किंचित्फलं कल्पनीयं श्रुतौ फलाश्रवणादिति 'सः स्वर्गः सर्वान्प्रत्यविशिष्टत्वा'दिति जैमिनिना सूत्रं प्रणीतम् । सः विश्वजिता साध्यः स्वर्गो भवितुमर्हति स्वर्गस्य सर्वान्प्रत्यविशिष्टत्वात्सर्वेषामिच्छाविषयत्वादिति यावत् । तथाच विश्वजिद्यागस्य पुत्रादिफलकत्वेऽपुत्राद्यर्थिनां तत्र प्रवृत्तिर्न स्यात् स्वर्गफलकत्वे तु तस्य सर्वेषामिच्छाविषयतया सर्वेषां तत्र प्रवृत्तिः संभवतीति स्वर्ग एव फलत्वेन कल्पयितुमुचितो नान्य इति तु न्यायपर्यवसितार्थः । तन्न्यायादत्रापि स्वर्ग एवेष्टं कल्प्यतामित्यर्थः । उपस्थितत्वादित्यनेन कस्योपस्थितत्वमुक्तमित्याकाङ्क्षायामाह—**परिशेषानुमाने प्रवर्तमानस्येति।** समाप्त्यन्याफलकत्वे सति सफलत्वहेतुकानुमान इति तदर्थः । **ननु** समाप्तित्वेन समाप्तेरुपस्थितिरकिंचित्करी व्याप्तिघटकाभावादीनामप्युपस्थितत्वाविशेषादित्यत आह—**ग्रन्थादौ प्रवृत्तपुरुषकामनाविषयत्वेनेति ।** तथाच तादृशकामनाविषयत्वप्रकारकोपस्थितिविषयत्वं नान्येषामिति भावः । ग्रन्थादौ प्रवृत्तिसमये ग्रन्थसमाप्तावेवेच्छाया औत्सर्गिकत्वात्तथात्वं बोध्यम् । **व्यतिरेकव्यभिचारमुद्धरतीति।** यद्यपि व्यतिरेकव्यभिचारनिश्चये सति कारणताया बाधितत्वेन समाप्तेर्मङ्गलकार्यत्वासिद्ध्या समाप्तिरूपकार्येण मङ्गलानु-

---

१ गौरवात्. २ समाप्तिकामो मङ्गलमाचरेत् इति. ३ नास्तिकात्मा जन्मान्तरीयमङ्गलवान् ग्रन्थसमाप्तेः.

इत्थंच यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम् । प्रचुरस्यास्यैव बलवत्तरविघ्ननिवारणे

दिनकरी ।

कारणतानुमितावप्रतिबन्धकत्वात् व्यभिचारनिर्णयस्य चाभावादिति भावः । नन्वेवमप्यन्वयव्यभिचारज्ञानं कारणताग्रहविरोधि भविष्यत्येवेत्याशङ्क्यान्वयव्यभिचारं निरस्यति—**यत्र चेति** । तत्र कादम्बर्यादौ । बलवत्तरत्वं वैजात्यम् । नन्वेवमपि कादम्बर्यादौ कुतो न विघ्नध्वंस इत्यत आह—**प्रचुरस्येति** । प्रचुरस्यैव मङ्गलस्येत्यर्थः । बलवत्तरविघ्ननिवारणे । बलवत्तरादिविघ्ननिवारणे । तेन प्रचुरविघ्नस्यापि संग्रहः । तथाच मङ्गलस्य विघ्नसमसंख्याकमङ्गलत्वेन नाशकतया न तत्र विघ्ननाश इति भावः । अत्र च विघ्नसमसंख्याकमङ्गलत्वेन हेतुत्वेऽधिकसंख्याकमङ्गलात् न्यूनसंख्याकविघ्ननाशो न स्यादतः प्राचुर्यं वेत्यत्र वाकारोऽनास्थायां बोध्यः । ननु तथापि कादम्बर्यादौ विघ्नध्वंसो मा जायतां समाप्तिः परं जायतां मङ्गलरू-

रामरुद्री ।

मितिरेव न संभवति, यदि तु जन्मान्तरीयमङ्गलसंदेहान्न व्यतिरेकव्यभिचारनिश्चयोऽपि तु संदेह एव, स च न कारणत्वानुमितौ प्रतिबन्धक इति समाप्त्या मङ्गलानुमानं संभवत्येवेत्युच्यते, तदा ग्राह्यसंदेहपर्यवसन्नतादृशव्यभिचारसंदेहस्याकिंचित्करत्वेन तादृशव्यभिचारोद्धारो विफल एव । तथापि कारणत्वानुमितावपि नास्तिकस्य जन्मान्तरीयमङ्गलसंदेहेन बाधितविषयकत्वसंदेहाद्भवत्यप्रामाण्यसंदेहः, अप्रामाण्यसन्देहास्कन्दितकारणतानिश्चयो न स्वकार्याय क्षम इति तदुद्धार आवश्यक इति भावः । व्यतिरेकव्यभिचारेण समाप्तेः कार्यत्वासिद्ध्या कथं समाप्तिकार्येण मङ्गलानुमानमित्याशङ्कां निरस्यति—**ग्राह्यसंदेहेत्यादिना । ननु** प्रचुरविघ्नस्थले यत्किंचिन्मङ्गलेन यत्किंचिद्विघ्नध्वंसस्यावश्यकतया स्वजन्यविघ्नध्वंससंबन्धेन मङ्गलस्य सत्वात्कथमेतत्पक्षे समाप्त्यभाव इत्याशङ्कां निरस्यति—**तथाचेत्यादिना । विघ्नसमसंख्याकेति ।** तत्स्थलीयविघ्नेतरावृत्तिसकलविघ्नवृत्तिर्या संख्या तत्सजातीया तत्स्थलीयमङ्गलेतरावृत्तितादृशसकलमङ्गलवृत्तिर्या संख्या तादृशसंख्यावन्मङ्गलत्वेनेत्यर्थः । अन्यथा विघ्नप्राचुर्येऽपि यत्किंचिद्विघ्नवृत्तिसंख्यामादाय, मङ्गलस्य न्यूनतायामपि मङ्गलान्यवृत्तिसंख्यामादाय वा समसंख्यत्वोपपादनसंभवात् । **अधिकसंख्याकमङ्गलादिति ।** एत-

---

१ विषयः.

दिनकरी ।

पहेतोः सत्वादित्याशङ्क्याह—**विघ्नध्वंसस्त्विति** । तथाच स्वजन्यविघ्नध्वंसवत्त्वसंबन्धेन मङ्गलाभावान्न समाप्तिरिति भावः । आहुरित्यस्वरसोद्भावनम् । तद्बीजं तु विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वं न संभवति नास्तिकग्रन्थसमाप्तौ व्यभिचारात् । नच स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासंबन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसावच्छेदकतासंबन्धेन मङ्गलस्य हेतुत्वात् स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति आश्रयतासंबन्धेन मङ्गलस्य हेतुत्वाद्वा जन्मान्तरीयमङ्गलकल्पनया न व्यभिचार इति वाच्यम्, तथासति जन्मान्तरीयसमाप्तिमुद्दिश्य जन्मान्तरीयमङ्ग-

रामरुद्री ।

च्चापाततः । निरुक्तविघ्ननिष्ठसंख्यासजातीयतत्स्थलीयमङ्गलेतरावृत्तिसंख्यावन्मङ्गलत्वेन कारणत्वे अधिकसंख्याकमङ्गलादपि स्वल्पविघ्ननाशसंभवात् । वस्तुतस्तु प्रतिबन्धकसंसर्गाभावविधया सकलविघ्नाभावस्यापि समाप्तिहेतुत्वेन विघ्नध्वंससंबन्धेन मङ्गलसत्वेऽपि मङ्गलेतरयावत्कारणान्तर्गतयावत्प्रतिबन्धकाभावस्यासत्वादेव नान्वयव्यभिचार इत्यत्रैव मूलतात्पर्यात् समसंख्याकमङ्गलत्वेन कारणतावर्णनमयुक्तमेव । परंतु बलवत्तरत्वरूपवैजात्यकल्पनं गौरवग्रस्तमित्यभिप्रायेणैव मूले द्वितीयपक्षावलम्बनमिति ध्येयम् । **नच स्वजनकविघ्नेति** । अत्र स्व[1]जनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासंबन्धेन समाप्तिं प्रति मङ्गलस्य हेतुत्वात् समाप्तिं प्रति स्व[2]जन्यविघ्नध्वंसावच्छेदकतासंबन्धेन मङ्गलस्य हेतुत्वात् स्व[3]प्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसंबन्धेन समाप्तिं प्रति आश्रयतासंबन्धेन मङ्गलस्य हेतुत्वाद्वेत्यन्वयेन कार्यकारणभावत्रयलाभः तत्राद्यद्वयं शरीरनिष्ठ[4]प्रत्यासत्त्या, तृतीयस्त्वात्मनिष्ठ[5]प्रत्यासत्त्या, प्रथमकल्पे कारणतावच्छेदकसंबन्धः द्वितीयकल्पे कार्यतावच्छेदकसंबन्धश्च केवलावच्छेदकतैव स च सुगमत्वाद्ग्रन्थकृता नोक्त इति बोध्यम् । एतेन कार्यतावच्छेदकसंबन्धस्य कारणतावच्छेदकसंबन्धस्य चातिगुरुभूतस्यादरणं प्रयोजनाभावाद्ग्रन्थकृतामनुचितमिति केषांचिदाक्षेपो निरवकाशः । अत एवोत्पत्तिपदमपि सार्थकम् । अन्यथा स्वजनकविघ्नध्वंसावच्छेदकतासंबन्धेन नास्तिकशरीरेपि समाप्त्युत्पत्त्या तत्रावच्छेदकतासंबन्धेन मङ्गलविरहेपि स्वजन्यविघ्नध्वंसावच्छेदकतासंबन्धेन मङ्गलसत्वेन व्यभिचाराप्रसक्त्या तदुपादानवैयर्थ्यापत्तेरिति ध्येयम् । **जन्मान्तरीयसमाप्तिमिति** । नचेष्टापत्तिः, तथा शिष्टानामाचारानुभवादिति भावः । अत्रेदमवधेयम् । मङ्गलाचरणस्य बहुवित्तव्ययायाससाध्यत्वविरहेण

---

१ स्वं समाप्तिः. २ स्वं मङ्गलम्. ३ स्वं समाप्तिः. ४ अवच्छेदकतासंबन्धेन. ५ समवायेन.

कारणत्वं विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः। नव्या-

दिनकरी।

लकरणापत्तेरतः स्वंप्रतियोगिचरमवर्णावच्छेदकतासंबन्धेन समाप्तिं प्रति स्वोत्पत्त्यवच्छेदकजातीयतासंबन्धेन मङ्गलहेतुत्वस्य वाच्यतया नास्तिकशरीरे व्यभिचारस्य दुर्वारत्वात्। नच पुत्रकामाधिकरण-विरोधः सहकार्यन्तरासमवधानेनैहिकपुत्राभावेप्यामुष्मिकपुत्ररूपफलस्य तत्र सिद्धान्तितत्वादिति वाच्यम्, तत्र पुत्रमात्रकामनाश्रवणा-दिह तु विशिष्टशिष्टाचारानुमितश्रुत्या ऐहिकसमाप्तेरेव मङ्गलफल-

रामरुद्री।

ग्रन्थारम्भसमयेपि कर्तुं शक्यतया जन्मान्तरे ग्रन्थकर्तृत्वसामर्थ्यविरहदशायामेतदुपेक्षणसंभवेन नेयमापत्तिः संभवति। नहि कश्चिद्भाविराज्यसम्भावनया स्वल्पवित्तसाध्यं श्वेतच्छत्रमावश्यकमर्जयति। ग्रन्थकरणसामर्थ्यसत्वे ग्रन्थसमाप्तिमुद्दिश्य मङ्गलमाचरतो ग्रन्थकरणप्रवृत्तिरावश्यकी आवश्यकी च तत्समाप्तिरिति। यदि च कदाचिद्विघ्नभूयस्त्वादिना न समाप्तिस्तथापि न तत्र जन्मान्तरीयसमाप्तेरुद्देश्यता, भ्रान्त्या ऐहिकसमाप्तेरेवोद्देश्यतासंभवादिति। **अतः स्वप्रतियोगीति**। न चावच्छेदकतासंबन्धेन समाप्तिं प्रतीत्येव वक्तव्यं किं स्वप्रतियोगिचरमवर्णावच्छेदकतापर्यन्तानुधावनेनेति वाच्यम्। यत्र वर्णोत्पत्तिद्वितीयक्षणे शरीरक्रियया शरीरस्यैतद्देशाद्विभागः तेन च पूर्वसंयोगनाशः तत्र तच्छरीरावच्छेदेन न वर्णनाशः किंतु शरीराधिकरणवृत्तिप्रभाद्यवच्छेदेनैवेति नावच्छेदकतायाः कार्यतावच्छेदकसंबन्धत्वमङ्गीकृतम्। **स्वोत्पत्त्यवच्छेदकजातीयतेति**। मङ्गलावच्छेदकशरीर एव समाप्तिरिति न नियमः अवयवोपचयादिना समाप्तिसमये मङ्गलावच्छेदकशरीरनाशात्। अतो जातीयतापर्यन्तानुधावनम्। जातिश्च एकक्षणवृत्तिपदार्थद्वयावृत्तित्वेन विशेषणीया तेन जन्मान्तरीयशरीरस्यापि पृथिवीत्वादिना मङ्गलावच्छेदकशरीरसजातीयत्वेपि न क्षतिः। तादृशी च जातिः तत्तत्पुरुषीयतत्तज्जन्मीययावच्छरीरवृत्तिचैत्रत्वादिजातिरेवेति नोक्तक्षतिः। यद्यपि स्वावच्छेदकजातीयतेत्युक्तावपि न दोष इत्युत्पत्तिप्रवेशवैयर्थ्यं तथापि विघ्नध्वंसस्याप्यनेनैव संबन्धेन हेतुत्वमिति लाभायैवात्रोत्पत्तिप्रवेशः मङ्गलस्यानेन संबन्धेन हेतुत्वे विघ्नध्वंसस्याप्यनेन संबन्धेन हेतुत्वमिति लाभसंभवात्। विघ्नध्वंसस्य तु कारणतावच्छेदकसंबन्धे उत्पत्तिप्रवेश आवश्यकः। अन्यथा जन्मान्तरीयसमाप्तेरपि विघ्नध्वंसफलत्वापत्तेरिति मन्तव्यम्। यद्वा स्तुतिरूपमङ्गलस्य मीमांसकमते नित्यतया तदवच्छेदकत्वं शरीरस्य न संभवति किं तु प्राकट्यरूपतदुत्पत्तेरेवेति मीमांसकमतसंग्रहायैवोत्पत्तिपर्यन्तनिवेशनम्। **पुत्रकामाधिकरणेति**। पुत्रकामः पुत्रेष्ट्या यजेतेति

---

१ स्वं समाप्तिः.

दिनकरी ।

**त्वात् । नच स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य मङ्गलकार्यतावच्छेदकत्वान्न व्यभिचार इति वाच्यम् ,**

रामरुद्री ।

विधौ पुत्रकामपदमधिकृत्य यो विचारस्तद्विरोध इत्यर्थः । **स्वावच्छेदकावच्छिन्नेति ।** आस्तिकनास्तिकाभ्यां युगपद्यत्र ग्रन्थसमाप्तिः कृता तत्र नास्तिकीयसमाप्तेरपि आस्तिकीयमङ्गलजन्यविघ्नध्वंसाव्यवहितोत्तरक्षणोत्पत्तिकत्वेन तत्पूर्वमुक्तसंबन्धेन कार्याधिकरणे मङ्गलविरहाद्व्यभिचार[1] इत्यतः स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वनिवेशः । नास्तिकसमाप्तौ व्यभिचारवारणाय द्वितीयसंबन्धप्रवेशः । स्वोत्तरत्वं स्वाधिकरणक्षणध्वंसाधिकरणत्वमेव । तादृशक्षणोत्पत्तिकत्वं च नास्तिकसमाप्तिसाधारणमेवेत्यव्यवधाननिवेशेनैव नास्तिकसमाप्तिर्व्यावर्तनीया । तच्चाव्यवधानं यदि स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं तदा आस्तिकीयसमाप्तेरप्यसंग्रहः, स्वाधिकरणीभूतविघ्नध्वंसोत्पत्त्यधिकरणक्षणध्वंसाधिकरणतद्द्वितीयक्षणध्वंसानधिकरणत्वस्य समाप्त्युत्पत्तिक्षणे क्वाप्यसंभवात् । यदिच स्व[2]ध्वंसाधिकरणक्षणध्वंसानधिकरणत्वं तदित्युच्यते, तदापि ध्वंसस्य ध्वंसाप्रसिद्ध्या तादृशोभयसंबन्धेन ध्वंसविशिष्टाप्रसिद्धिरेव । यत्तु स्वाधिकरणतत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वमेवाव्यवहितत्वं, तच्च सर्वत्र तत्क्षणपदेन समाप्त्यव्यवहितपूर्वक्षणव्यक्तिमादाय समाप्तिक्षणे सूपपादमेव, नास्तिकशरीरे व्यभिचारवारणं तु स्वावच्छेदकावच्छिन्नप्रतियोगिकत्वदलेनैवेति कैश्चित् प्रलपितं तदत्यन्तमसत् । आत्मन्युत्पन्नस्य विघ्नध्वंसस्य ध्वंसाभावेन तदीयभोगायतनजन्मान्तरशरीरावच्छेदेनापि तदात्मनि सत्वस्यावश्यकत्वात् प्रथमदलेन नास्तिकसमाप्तिवारणासंभवात् , अन्यथा जन्मान्तरार्जितपुण्यपापादेरपि जन्मान्तरीयशरीरावच्छेदेनाऽसत्त्वापत्त्या तदवच्छेदेन भोगजनकता न स्यात् । नच स्वावच्छेदकेत्यस्य स्वोत्पत्त्यवच्छेदकार्थकत्वान्नोक्तदोष इति वाच्यम् । तथासति आस्तिकीयसमाप्तेरपि स्वोत्पत्त्यवच्छेदकावच्छिन्नप्रतियोगिकत्वाभावेनासंग्रहप्रसङ्गात् । नच स्वोत्पत्त्यवच्छेदकजातीयावच्छिन्नप्रतियोगिकत्व एव तात्पर्यमिति न कोपि दोष इति वाच्यम् । एवमपि निरुक्ताव्यवधाननिवेशे प्रयोजनविरहेण तद्वैयर्थ्यस्य दुरुद्धरत्वादिति चेत्सत्यम् , स्वोत्तरजन्मानुत्तरत्वमेव प्रकृते अव्यवहितत्वं । जन्म च आद्यशरीरप्राणसंयोगः । शरीरे आद्यत्वं च स्वसजातीयशरीरध्वंसानधिकरणत्वं । जातिश्च पूर्वोक्तैव ग्राह्याऽतो नाप्रसिद्धिः । एवंच नास्तिकीयसमाप्तेर्विघ्नध्वंसोत्तरजन्मोत्तरक्षणोत्पत्तिकत्वेनाव्यवधाननिवेशात्तद्वारणमव्याहतमेव । नच आस्तिकीयसमाप्तेरपि स्वोत्तरपुरुषान्तरीयजन्मोत्तरक्षणोत्पत्तिकतयाऽसंग्रहो दुर्वार एवेति वाच्यम् । स्वा[3]श्रयशरीरावच्छिन्नभोगाश्रयत्वदैशिकविशेषणत्वोभयघटितसामानाधिकरण्यसंबन्धेन विघ्नध्वंसविशिष्टत्वेन

१ व्यतिरेकव्यभिचारः. २ मङ्गलजन्यविघ्नध्वंसः. ३ स्वं जन्म तच्चोक्तसंबन्धेनारमनिवर्तते दैशिकविशेषणतया विघ्नध्वंसोऽपि तत्र वर्तेत इति तस्य विघ्नध्वंसविशिष्टत्वम् ।

दिनकरी।

कारणस्य कार्यतावच्छेदकत्वानुपगमात्। अतएव काशीमरणान्मुक्तिरिति श्रुत्यन्तर्गतपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं ग्रन्थकृतां संगच्छते। अन्यथा तत्रापि काशीमरणविशिष्टमुक्तिं प्रति काशीमरणहेतुत्वस्य निर्दुष्टतया तथोपवर्णनमसंगतं स्यात्। अथ 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति श्रुत्या तत्त्वज्ञानस्य मुक्तिसामान्यं प्रति हेतुत्वं प्रतिपादितं तच्च काशीमरणस्य मुक्तिहेतुत्वे न संभवति काशीमरणजन्यमुक्तौ तत्त्वज्ञानस्य व्यभिचारप्रसङ्गादतः काशीमरणस्य न मुक्तिजनकत्वमपि तु तत्त्वज्ञानद्वारा मुक्तिप्रयोजकत्वमेवेति ग्रन्थकृतां तत्रत्यपञ्चम्याः प्रयोजकत्वपरत्वोपवर्णनं, न तु कारणस्य कार्यतानवच्छेदकत्वात्तथोपवर्णनमिति चेदस्तु कारणस्य कार्यतावच्छेदकत्वमस्तु च पूर्वोक्तरीत्या मङ्गलजन्यविघ्नध्वंसविशिष्टसमाप्तित्वस्य कार्यतावच्छेदकत्वेन नास्तिकशरीरे व्यभिचारवारणम्। एवमपि भोगादिनाश्यविघ्नध्वंसपूर्वकसमाप्तौ कॢप्तनियतपूर्ववृत्तिताकेन ध्वंसेनैव मङ्गलस्थलीयसमा-

रामरुद्री।

जन्मनो विशेषणीयत्वात्। नचैवमपि यादृशग्रन्थसमाप्त्यनन्तरं ग्रन्थकर्तुर्मुक्तिस्तादृशसमाप्तेरसंग्रह एव स्वोत्तरस्वसमानाधिकरणजन्माप्रसिद्धेरिति वाच्यम्। स्वोत्तरचरमशरीरानुत्तरत्वस्यैवाव्यवधानपदार्थत्वेनाङ्गीकरणीयत्वात्। चरमत्वं च स्वसजातीयशरीरप्रागभावानधिकरणत्वं, इत्थंच समाप्त्युत्तरं मुक्तिस्थलेपि स्वोत्तरचरमशरीरप्रसिद्ध्या नासंग्रहः। उत्तरत्वनिवेशनं च यत्र नास्तिकेन मङ्गलाचरणं विनैव ग्रन्थान्तरसमाप्तिः कृता तदनन्तरं तच्छरीरेणैवास्तिको भूत्वा तदनन्तरजातविघ्नं मङ्गलाचरणेन नाशयित्वा ग्रन्थान्तरसमाप्तिः कृता तत्रत्यपूर्वसमाप्तौ व्यभिचारवारणायैवेति दिक्॥ कारणस्य कार्यतानवच्छेदकत्वे प्राचां संमतिमाह—**अतएवेति**। कारणस्य कार्यतावच्छेदककोटिप्रवेशाङ्गीकारेपि काशीमरणान्मुक्तिरित्यत्र पञ्चम्याः प्रयोजकत्वार्थकत्वोपवर्णनमावश्यकं, तथा च कारणस्य कार्यतानवच्छेदकत्वे न प्राचां संमतिरित्याशयेन शङ्कते—**अथेति**। कारणस्य कार्यतावच्छेदककोटिप्रवेशसंभवेपि समाप्तिं प्रति मङ्गलस्य न हेतुतासंभवः अन्यथासिद्धत्वादित्याशयेन समाधत्ते—**एवमपीति**। विघ्नध्वंसस्य कार्यत्वावश्यकतयेति। तथा च प्राचीनमते समाप्तौ विघ्नध्वंसे च मङ्गलकार्यत्वं कल्पनीयमिति गौरवमिति भावः। विघ्नो मे निवर्ततामिति कामनयेति। सावधार-

---

१ वैशिष्ट्यं जन्यतासंबन्धेन. २ अतिमृत्युर्मोक्षः.

स्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादि-कारणकलापात् । न चैवं स्वतःसिद्धविघ्नविरहवता कृतस्य

दिनकरी।

द्युपपत्तेर्मङ्गलस्यान्यथासिद्धत्वं दुर्वारमेव । नच व्यापारेण व्यापारिणो नान्यथासिद्धिरिति वाच्यं, यत्र व्यापारिणः प्रमाणबोधितकारणतानिर्वाहाय व्यापारस्य कारणत्वं कल्प्यते यथा यागस्य स्वर्गहेतुतानिर्वाहार्थमपूर्वं तत्रैव व्यापारेण व्यापारिणो नान्यथासिद्धिः । अतएव काशीमरणस्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात् प्रयोजकत्वपरतया श्रुतिसमर्थनं संगच्छते । प्रकृते च प्रतिबन्धकाभावस्य कार्यमात्रे हेतुताया मङ्गलकारणतां विनापि कॢप्ततया मङ्गलस्य अन्यथासिद्धत्वं दुष्परिहरमेवेति विघ्नध्वंसस्य द्वारत्वमिच्छतां प्राचां मतेपि विघ्नध्वंसस्य कार्यत्वावश्यकतया विघ्नो मे निवर्ततामिति कामनया मङ्गलाचरणेन च विघ्नध्वंस एव फलमिति वदतां चिन्तामणिकृतां मतमाह—**नव्यास्त्विवति**। विघ्नध्वंस एवेत्येवकारेण समाप्तिव्यवच्छेदः। फलं प्रवृत्त्युद्देश्यम्। ननु समाप्तिस्तर्ह्याकस्मिकी स्यादत आह—**समाप्तिस्त्विवति** । बुद्धिर्ज्ञानं। प्रतिभा तद्विशेषः स्फूर्त्याख्यः, प्रतिभादीत्यादिना विघ्नसंसर्गाभावपरिग्रहः । अनयैव रीत्या कारीरीष्टिस्थलेप्यवग्रहनिवृत्तिरेव फलं

रामरुद्री।

णोयं निर्देशः, अन्यथा विघ्नध्वंसद्वारैव समाप्तेर्मङ्गलफलतया समाप्तिकामनाधीनविघ्नध्वंसकामनाया अपि मङ्गलाचरणप्रयोजकतया विघ्नध्वंसकामनया मङ्गलाचरणस्य प्रकृतानुपयोगप्रसंगात् । अथवा, ननूभयोर्मङ्गलकार्यत्वे गौरवेपि विघ्नध्वंसस्यैव मङ्गलफलत्वं विघ्नध्वंसकामनया मङ्गलानुष्ठानान्न संभवति, यस्य यत्फलत्वं तत्कामनया तदनुष्ठाननियमादित्याशङ्कां निराकुरुते—**विघ्नो मे निवर्ततामित्यादिना**। **ननु** विघ्नध्वंस एव मङ्गलफलमिति मूलोक्तिरयुक्ता फलपदस्य जन्यार्थकतया मङ्गलध्वंसस्यापि मङ्गलजन्यतया एवकारासंगतेरित्याशङ्कां निराकुर्वन्फलपदं व्याचष्टे—**फलमिति**। **आकस्मिकीति**। यत्किंचित्कारणानियम्येत्यर्थः। **नन्वेवं** कारीरियागस्यापि वृष्टिः फलं न स्यात् यागेनावग्रहनिवृत्तौ स्वकारणादेव वृष्टिसंभवादित्याशङ्कामिष्टापत्त्या परिहरति—**अनयैवेति**। अवग्रहो वृष्टिप्रतिबन्धको दुरितविशेषः।

---

१ व्यापारेण विघ्नध्वंसेन, व्यापारिणः मङ्गलस्य. २ मङ्गलस्थले.

मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम् । इष्टापत्तेः, विघ्नशङ्कया तदाचरणात् । तथैव शिष्टाचारात् । नच तस्य निष्फलत्वे [1]तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम् । सति विघ्ने तन्ना-

दिनकरी ।

वृष्टिस्तु स्वकारणादेवेति बोध्यम् । एवं मङ्गलस्य विघ्नध्वंसं प्रति जनकत्वे । स्वतःसिद्धविघ्नविरहवतेति । विघ्नात्यन्ताभाववते-त्यर्थः । ननु निष्फले प्रवृत्तिरेव कथमत आह—विघ्नशङ्कयेति । संशयनिश्चयसाधारणविघ्नज्ञानमेव प्रवर्तक[2]मिति भावः । तदाचरणात्, मङ्गलाचरणात् । ननु विघ्नसंशये मङ्गलाचरणमेवासिद्धमित्यत्राह— तथैवेति । शिष्टाचारादिति । विषयतासंबन्धेन मङ्गल इति शेषः । ननु निर्विघ्नपुरुषानुष्ठितमंगलस्थलेऽन्वयव्यभिचारेण विघ्नध्वंसं प्रति मङ्गलस्य कारणता बाधिता तथाच बाधितार्थबोधकत्वाद्वेद[3]स्या-प्रामाण्यमिति, श्रुतेः कारणताबोधकत्वमङ्गीकर्तुर्मते शङ्कां निरस्यति —नचेति । तस्य, निर्विघ्नपुरुषानुष्ठितमङ्गलस्य । तद्बोधकेति । मङ्गलविघ्नध्वंसयोः कार्यकारणभावबोधकेत्यर्थः । सति विघ्न इति । तथाचोप[4]दर्शितस्थले प्रतियोगिरूपकारणाभावेन विघ्नध्वंसरूपकार्या-नुदयोपपत्तौ कारणतायाः अबाधितत्वेन न कारणताबोधकवेदा-प्रामाण्यमिति भावः । अतएव, नाशं प्रति प्रतियोगिनः कारणत्वा-देव । तद्बोधकवेदाप्रामाण्यमिति । प्रायश्चित्तस्य पापनाश-

रामरुद्री ।

श्रुतेः कारणताबोधकत्वमिति । विध्यर्थः केषांचि[5]न्मते शाब्दीभावना कथंचि-दपूर्वं, न्यायमते त्विष्टसाधनत्वं, तथाच मङ्गले विघ्नध्वंसकारणताया बाधितत्वेन शिष्टा-चारानुमितायाः विघ्नध्वंसकामो मङ्गलमाचरेदिति श्रुतेरप्रामाण्यापत्तिः, न्यायमते तत्र विधिना मङ्गले विघ्नध्वंसकार[6]णताया एव प्रत्येतव्यत्वादिति भावः । ननु सति विघ्ने तन्नाशस्यैव वेदबोधितत्वादिति मूलमसंगतं स्वर्गकामो यजेतेत्यादिवद्विघ्नध्वंसकामो मङ्गलमाचरेदित्यादावपि विघ्नध्वंसकारणत्वमेव विध्यर्थो वाच्यः नतु सतिविघ्न इत्यपि तद्बोधकपदाभावात् अतस्तन्मूलतात्पर्यमाह—तथाचेति । सति विघ्ने इति मूले मङ्गलादिति शेषः । तथाच केवलदण्डाद्घटानुत्पत्तावपि दण्डो घटकारणमिति

---

१ तद्बोधको मङ्गलकर्तव्यत्वबोधकः. २ मंगलकृतिं प्रतीतिशेषः. ३ विघ्नध्वंसकामो मङ्गलमाचरेदिति वेदस्य. ४ स्वतःसिद्धविघ्नविरहस्थले. ५ मीमांसकमते. ६ विघ्नध्वंस-स्यैवेष्टत्वादिति भावः.

शस्यैव वेदबोधितत्वात्। अतएव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं च विघ्नध्वंसविशेषे कारणम्। विघ्नध्वंसविशेषे च विनायकस्तव-

दिनकरी।

कत्वबोधकवेदाप्रामाण्यमित्यर्थः। ननु मङ्गलं न विघ्नध्वंसे कारणं विनायकस्तवपाठादिजन्यविघ्नध्वंसे व्यभिचारात् विनायकस्तवस्य मङ्गलत्वेपि [1]तदनुकूलकण्ठाभिघातरूपस्य तत्पाठस्य मङ्गलत्वाभावात्। नच पाठकतासंबन्धेन विनायकस्तव एव विघ्ननाशकः स च मङ्गलमेवेति न व्यभिचार इति वाच्यं, "सर्वे विघ्नाः शमं यान्ति" इत्यादिना तत्पाठस्यापि विघ्ननाशकत्वबोधनात्। प्रायश्चित्तजन्यविघ्नध्वंसे व्यभिचाराच्चेत्यत आह—मङ्गलं चेति। स्तवपठादिरित्यादिना प्रायश्चित्तपरिग्रहः। तथाच मङ्गलस्य स्वसामानाधिकरण्य [2]स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन मङ्गलविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेदकम्। एवं विनायकस्तवपाठादे[3]रुपदर्शितसंबन्धेन विनायकस्तवपाठादिविशिष्टविघ्नध्वंसत्वं विजातीयविघ्नध्वंसत्वं वा कार्यतावच्छेदकमिति न व्यभि[4]चार इति भावः। ननु विघ्नध्वंस एव यदि मङ्गलस्य फलं तदा समाप्तिकामस्य मङ्गले प्रवृत्तिर्न स्यादतः समाप्तिसाधनविघ्नध्वंससाधनत्वान्मङ्गले प्रवृत्तिर्वाच्या तच्च न

रामरुद्री।

वाक्यस्य नाप्रामाण्यं सर्वदा दण्डे घटाव्यवहितपूर्वत्वस्य तात्पर्याविषयत्वात् किंतु दण्डेतरयावद्घटकारणसत्वे दण्डे घटाव्यवहितपूर्वत्वमेव तात्पर्यविषयस्तद्वत्प्रकृतेपीति मूलाशयः। **शमं यान्तीत्यादिनेति**। आदिना गणेशस्तवपाठत इत्यस्य संग्रहः। स्तवपाठस्य विघ्नध्वंसकारणतायास्तादृशवाक्यबोधितत्वेपि पाठजन्यविघ्नध्वंसे मङ्गलस्य व्यभि[6]चारो दुर्घट एव स्तुतिरूपमङ्गलस्य पाठकतासंबन्धेन कार्याधिकरणे वृत्तेरित्यतः स्थलान्तरे व्यभिचारं दर्शयति—**प्रायश्चित्तजन्येति**। विशेषपदार्थमेव प्रकटयन्नाह—**तथाचेति**। लाघवादाह—**विजातीयेति**। **प्रवृत्तिर्न स्यादिति**। यद्धि यस्य फलं भवति तत्कामस्यैव तत्र प्रवृत्तिनियमादिति भावः। **प्रवृत्तिर्वाच्येति**। तृप्तिकामस्य तृप्तिसाधनौदनसाधने पाके प्रवृत्तिरिवेति

१ मङ्गलानुकूल. २ स्वं मङ्गलम्. ३ स्वसामानाधिकरण्यस्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन. ४ व्यतिरेकव्यभिचारः. ५ सर्वे विघ्नाः शमं यान्तीति. ६ व्यतिरेकव्यभिचारः.

पाठादि, क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रति-बन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् । इत्थं च नास्तिका-

दिनकरी ।

संभवति स्वतःसिद्धविघ्नविरहस्थले व्यभिचारेण विघ्नध्वंसस्य समाप्ति-साधनत्वाभावादिति शङ्कां निरस्यति—**क्वचिदिति**।नन्वेवमननुगमोऽतोनुगतेन रूपेण कारणत्वे बीजमाह—**प्रतिबन्धकेति**। संसर्गाभावस्य संसर्गाभावत्वेन संसर्गाभावस्य । तथाच विघ्नसंसर्गाभावत्वेन हेतुत्वान्न पूर्वोक्तव्यभिचार इति भावः । अत्र च तत्तद्विघ्नाभावत्वेन हेतुता नतु विघ्नाभावकूटत्वेन विघ्नप्रागभावादीनामेकत्रासंभवेन समाप्तिर्न स्यादिति बोध्यम् । यत्र च मङ्गलं विनापि समाप्तिस्तत्र विघ्नध्वंसाभाववति समाप्तेर्दर्शनात् व्यतिरेकव्यभिचारमाशङ्क्य निषेधति । **इत्थं चेति** । दुरितध्वंसकल्पने तज्जनकीभूतमङ्गलकल्पने च गौरवा-

रामरुद्री ।

शषः । **व्यभिचारेणेति** । व्यतिरेकव्यभिचारेणेत्यर्थः । **संसर्गाभावत्वेन संसर्गाभावस्येति** । संसर्गाभावत्वावच्छिन्नस्येति पर्यवसितार्थः । इदं च विवरणं संसर्गाभावस्य ध्वंसत्वादिना कारणत्वेपि **न व्यभिचारनिरास इति** । यथाश्रुतमूलवाक्यस्योक्तशङ्काया अनिरासकत्वादिति बोध्यम् ॥ **ननु** तत्तद्विघ्नाभावानां यदि विघ्नसंसर्गाभावत्वेन हेतुता तदा यत्किंचिद्विघ्नसत्वे विघ्नप्रतियोगिकसंसर्गाभावस्य सत्वेन समाप्त्यापत्तिः यदि विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेन हेतुता तदा ध्वंसप्रागभावयोर्न हेतुता तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गीकारात्, यदि च विघ्नप्रतियोगिकसंसर्गाभावकूटत्वेन हेतुता तदा क्वापि समाप्तिर्न स्यात् ध्वंसप्रागभावादीनामेकदा एकत्रासत्वेन कूटाधिकरणत्वस्य कदाप्यसम्भवादित्याशङ्कां परिहर्तुमाह—**अत्र चेति** । **तत्तद्विघ्नाभावत्वेनेति** । तत्तद्विघ्नप्रतियोगिकसंसर्गाभावत्वेनेत्यर्थः । तेन भेदमादाय न विघ्नसत्वेपि समाप्त्यापत्तिः । नचैवमपि विघ्नसत्वे समाप्त्यापत्तिर्दुर्वारा तत्तद्विघ्नव्यक्तेरपि द्वित्वादिनाऽत्यन्ताभावरूपसंसर्गाभावसत्वादिति वाच्यम् । तत्तद्विघ्नत्वेतरधर्मानवच्छिन्नतत्तद्विघ्ननिष्ठप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थविवक्षयोक्तदोषप्रतीकारसंभवात्, ध्वंसप्रागभावयोरपि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वाङ्गीकारे तु तत्तद्विघ्नत्वावच्छिन्नप्रतियोगिताकसंसर्गाभावत्वेनेत्यर्थकरणेपि न क्षतिरिति मन्तव्यम् । **विघ्नध्वंसाभाववतीति** । विघ्नसंसर्गाभावसामान्याभाववतीत्यर्थः । अन्यथा यथाश्रुते विघ्नध्वंसाभाववत्यपि विघ्नात्यन्ताभावसंभवेन विघ्नसंसर्गाभावत्वेन हेतुत्वे

१ प्रतिबन्धकात्यन्ताभावस्य.

दिनकरी ।

दाह—**स्वतःसिद्धेति** । यत्र च मङ्गले सत्यपि न समाप्तिस्तत्र मंगलाद्विघ्नध्वंसो भवत्येव समाप्त्यभावस्तु विघ्नभूयस्त्वात्तन्मङ्गलानन्तरोत्पन्नाद्विघ्नाद्वेत्यवधेयम् । अथ समाप्तिविघ्नध्वंसयोराकाशात्मनिष्ठयोः कथं कार्यकारणभाव इति चेदुच्यते । स्वप्रतियोगिप्रयोजकत्व[1]-सम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति विशेषणतासम्बन्धेन विघ्नसंसर्गाभावत्वेन हेतुत्वमिति । वस्तुतस्तु आहुरित्यनेन सूचितामन्यथासिद्धिं प्रकटयति—**क्वचिच्चेति** । विघ्नात्यन्ताभाव एवेत्येवकारेण विघ्नध्वंसस्य तद्द्वारकमङ्गलस्य च व्यवच्छेदः । **समाप्तिसाधनं** । समाप्त्यव्यवहितपूर्ववर्तितया निश्चितः । तथाच तेनैव[2] मङ्गलस्थलीयसमाप्तिनिर्वाहे मङ्गलस्य तज्जन्यविघ्नध्वंसस्य चान्यथा[3]सिद्धिः । ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधे मानाभावात् । ध्वंसस्थलेऽपि अत्यन्ताभावसत्त्वादिति भावः । नन्वन्योन्याभावभिन्नाभावत्वेनैव लाघवाद्धेतुतास्त्वत आह—**प्रतिबन्धकसंसर्गेति** । प्रतिबन्धकस-

रामरुद्री ।

व्यतिरेकव्यभिचारासम्भवेनाऽसंलग्नकतापत्तेः, तथा च यत्र[4] मङ्गलं विनैव समाप्तिस्तत्र विघ्ननाशकमङ्गलासत्त्वेन विघ्नस्यैवसत्वात्, निरुक्तविघ्नप्रतियोगिकस्य कस्यापि संसर्गाभावस्यासत्त्वेन तद्विघ्नसंसर्गाभावस्य व्यतिरेकव्यभिचारो दुर्वार एवेति भावः । **ननु** यत्र[5] सत्यपि मङ्गले न समाप्तिर्दृश्यते तत्र मङ्गलाद्विघ्नध्वंस एव न जात इत्यवश्यमङ्गीकरणीयं अन्यथा तत्तद्विघ्नसंसर्गाभावानां सत्वेन समाप्तिविरहस्योपपादयितुमशक्यत्वात्तथाचान्वयव्यभिचारेण मङ्गलस्य विघ्नध्वंसफलकत्वं न शक्यते वक्तुमित्याशङ्कां निराकुरुते—**यत्र चेति** । **विघ्नभूयस्त्वादिति**[6] । **ननु** मङ्गलानन्तरोत्पन्नविघ्नादपि तत्र सामाप्त्यभावसंभवेन नानाविघ्नव्यक्तीनां तत्कारणीभूतप्रागभावादीनां च कल्पने गौरवमतस्तथैवाह—**मङ्गलानन्तरेति** । **स्वप्रतियोगिप्रयोजकत्वेति** । स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्वसंबन्धेनेत्यर्थः । नच स्वप्रयोजकत्वसंबन्धेनेत्येव कुतो नोक्तं जीवात्मनि स्वानुकूलकृतिमत्वासंभवेपि स्वजनकचरमवर्णजनककृतिजनकत्वरूपस्य स्वप्रयोजकत्वस्य जीवात्मनि संभवादिति वाच्यम्, निरुक्तप्रयोजकत्वस्य नानाजनकताघटितत्वेन गौरवादिति भावः । क्वचिच्चेत्यादि प्रकारान्तरेण व्याचष्टे—**वस्तुतस्त्वित्यादिना** । समाप्तिसाधनमित्यस्य समाप्तिकारणमित्यर्थकत्वे क्वचिदि-

१ स्वं समाप्तिः. २ विघ्नात्यन्ताभावेनैव. ३ तथाच मङ्गलस्य विघ्नध्वंसस्य च न कारणत्वमिति भावः. ४ नास्तिकग्रन्थे. ५ किरणावल्यादिग्रन्थे. ६ विघ्नान्यूनसंख्याकमङ्गलरूपकारणाभावादिति भावः.

दीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः स्वतःसिद्धवि-

दिनकरी ।

त्वेपि संबन्धान्तरावच्छिन्नाभावस्य सत्वात्कार्योत्पादवारणाय तत्तत्सं-सर्गावच्छिन्नप्रतियोगिताकाभावत्वेनैव हेतुत्वस्य वाच्यत्वेन न ध्वंसस्य हेतुता तस्य संसर्गावच्छिन्नत्वे मानाभावादिति भावः। दुरितध्वंसः, दुरितध्वंससामग्रीप्रयुक्तः । स्वतःसिद्धो दुरितकारणाभावप्रयुक्तः । एतेन विघ्नध्वंसस्य तदत्यन्ताभावस्य वा समाप्तिहेतुताविचारस्या-प्रकृततया तद्व्यवस्थापने प्रकृतानुपयोगः । एवं प्रतिबन्धकाभाव-

रामरुद्री ।

त्वस्यासङ्गतिः तत्तद्विघ्नसंसर्गाभावत्वेन हेतुताया व्यवस्थापिततया सर्वत्रैवाभावत्रय-स्यापि कारणत्वात् नियतपूर्ववर्तितावच्छेदकधर्मवत्वस्यैव कारणतारूपत्वादतस्तत्पदं व्याचष्टे—**समाप्त्यव्यवहितेति** । **ननु** मङ्गलाद्विघ्नध्वंसस्थले ध्वंसप्रागभावा-भ्यामत्यन्ताभावस्य विरोधात् विघ्नात्यंताभावस्यैवासत्वेन कथं तेन विघ्नध्वंसस्यान्य-थासिद्धिरित्यत आह—**ध्वंसप्रागभावेत्यादि** । **अन्योन्याभावभिन्नाभाव-त्वेनेति** । सर्वत्र विघ्नात्यन्ताभावसत्वेपि न विघ्नात्यन्ताभावत्वेन हेतुता संभवति विघ्नसंसर्गाभावत्वापेक्षया नित्यत्वघटितस्य तस्य[1] गुरुत्वात् सति च लघुधर्मे गुरुधर्मस्य कारणतावच्छेदकत्वानङ्गीकारात् तथाचायातमेव त्रयाणामपि कारणत्वमिति भावः । **तत्तत्संसर्गेति** । प्रतिबन्धकतावच्छेदकसंसर्गेत्यर्थः । **वाच्यत्वेनेति** । तथाच प्रतिबन्धकसंसर्गाभावस्येति मूलस्य प्रतिबन्धकतावच्छेदकसंसर्गावच्छिन्नप्रतियोगि-ताकाभावस्येत्यर्थ इति भावः । **मानाभावादिति** । समवायेन घटाधिकरणे संयो-गेन घटो नास्ति संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीत्युपपत्तये हि संयोगसमवायसंबन्धावच्छिन्नघटाभावयोर्भेदोपपत्तये अत्यन्ताभावप्रतियोगितायां संबन्धावच्छिन्नत्वमङ्गीक्रियते ध्वंसे च तादृशयुक्त्यसंभवेन[2] संसर्गावच्छिन्नप्रतियो-गिताकत्वमप्रामाणिकमेवेति भावः । **नन्वेवं** विघ्नध्वंसस्याकारणत्वे[3] दुरितध्वंसः स्वतः सिद्धविघ्नात्यन्ताभावो वेत्याद्यग्रिमग्रन्थासंगतिरित्यतो दुरितध्वंसपदं व्याचष्टे—**दुरि-तध्वंससामग्रीति** । अत्यन्ताभावस्य नित्यत्वेऽपि प्रतियोगिसत्वदशायाम-त्यन्ताभावसंबन्धासत्वेनाधिकरणसंबद्धात्यन्ताभावे दुरितध्वंससामग्रीप्रयुक्तत्वमिति भावः । द्वितीयव्याख्यानादरणे स्वयमेव बीजं प्रकटयति—**एतेनेति** । **ननु** मङ्गलस्य विघ्नध्वंसफलकत्वे समाप्तिकामनया तत्र प्रवृत्तिः समाप्तिजनकविघ्नध्वंसजन-कत्वेनैवोपपादनीया । विघ्नध्वंसस्य समाप्तिहेतुत्वं च व्यभिचारेणासंभवदुक्तिकमि-त्याशङ्कायां क्वचिच्चेत्यादिग्रन्थस्यावतारितत्वेन न प्रकृतानुपयोग इत्यतो दूषणान्तर-

---

१ अत्यंताभावत्वस्य. २ भेदोपपत्तिरूपयुक्तिः. ३ समाप्तिकारणत्वाभावे.

**तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥**

ग्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः ॥ **संसारमहीरुहस्य बीजायेति । संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः । एतेन ईश्वरे प्रमाणं दर्शितं भवति ।**[1]

दिनकरी ।

कूटस्य हेतुत्वेऽतीता[2]नागत[3]प्रागभावध्वंसयोर्युगपदवस्थानासंभवेनैकदा कूटाप्रसिद्धिः पूर्वोक्तरीत्या तत्तत्संसर्गावच्छिन्नप्रतियोगिताकत्वस्य प्रतिबन्धकाभावविशेषणत्वेन ध्वंसप्रागभावयोरसंग्रहश्चेति दूषणानि निरस्तानि । उक्तरीत्याप्रतिबन्धकात्यन्ताभावस्यैव कार्यमात्रे हेतुत्वादिति । मूले **नूतनेत्यादि** । नूतनो यो जलधरो मेघस्तस्य रुचिरिव रुचिर्यस्य तस्मै । **एतेन** यथा नूतनजलधरः शीघ्रं वृष्टिप्रदस्तथायमपि स्वाभिलषितफलप्रद इति सूचितम् । नमस्कार्यस्य भगवतः संतुष्टतां सूचयितुमाह—मूले **गोपेति** । गोपानां वधूट्यः युवत्यः स्त्रियस्तासां दुकूलानि वस्त्राणि तेषां चोरायेत्यर्थः । **तस्मा इति** । तच्छब्दः सामान्यतः सकलजनप्रसिद्धत्वसूचनाय । अनेन भगवति नमस्कारप्रकारीभूतापकर्षावधित्वमुक्तं तदयुक्तं भगवति मानाभावादित्याशङ्क्य नैयायिकमतेनेश्वरसाधकानुमानसूचनायाह—**संसारेति । संसारस्य महीरुह इति** षष्ठीतत्पुरुषभ्रमं

रामरुद्री ।

माह—**एवमिति । ननु** प्रतिबन्धकसंसर्गाभावकूटत्वेन न हेतुतामङ्गीकुर्मो येनाप्रसिद्धिः स्यात् अपितु तत्तद्भिन्नसंसर्गाभावत्वेनेत्युक्तमेवेत्याशङ्क्य दूषणान्तरमाह—**पूर्वोक्तेति** । द्वितीयव्याख्याने तद्दोषनिवारणे हेतुमाह—**उक्तरीत्येति । प्रतिबन्धकाभावस्येति** । प्रतिबन्धकतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकतत्तत्प्रतिबन्धकाभावत्वेनेत्यर्थः ॥ यत्तदोर्नित्यसंबन्धात्प्रकृतश्लोके यत्पदाभावात्कथं तत्पदसङ्गतिरिति हृद्याशङ्क्य प्रकृते तच्छब्दस्य प्रसिद्धार्थकतया न यत्पदापेक्षेति समाधत्ते—**तच्छब्द इति । नमस्कारप्रकारीभूतेति** । स्वापकर्षबोधानुकूलव्यापारो नमःशब्दार्थः; अपकर्षान्वय्यवधित्वं कृष्णपदोत्तरचतुर्थ्यर्थ इति भावः । यद्य-

---

१ संसारमहीरुहकारणत्वकथनेन. २ वर्तमानध्वंसप्रतियोगित्वं अतीतत्वं. ३ वर्तमानप्रागभावप्रतियोगित्वं अनागतत्वं. ४ नमस्कर्ता नमस्कार्यापेक्षया अपकृष्ट इति ज्ञानानुकूलव्यापार इत्यर्थः । सच व्यापारः अञ्जलिशिरःसंयोगादिरूपः ।

**तथाहि । यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि ।**

दिनकरी ।

व्यावर्तयितुं कर्मधारयमाह—**मुक्तावल्याम् संसार एवेति** । बीजत्वं समवायिकारणत्वं तच्चेश्वरे बाधितमत आह—**निमित्तेति** । नन्वीश्वरे नमस्काररूपं मङ्गलाचरणमयुक्तं ईश्वरे मानाभावात्, नहि तत्र[1] प्रत्यक्षं प्रमाणमरूपिद्रव्यत्वेन बाह्यप्रत्यक्षाविषयत्वात्[2], नापि मानसं परात्मनः परेण मनसा प्रत्यक्षवारणायात्मप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीयात्ममनःसंयोगत्वेन हेतुत्वस्यावश्यकतया ईश्वरे तस्याभावात् । नाप्यनुमानं, लिङ्गाभावात् । नच द्यावाभूमी जनयन्नित्यादि श्रुतिरेव प्रमाणं, श्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्यादीश्वरसंदेहे श्रुतिप्रामाण्यस्यापि संदिग्धत्वात्[3] अत आह—**एतेनेति** । प्रमाण-

रामरुद्री ।

प्यवधित्वस्यापादानतारूपतया तदर्थिका पञ्चम्येव नतु चतुर्थी तथापि क्रियान्वय्यवधित्वस्यैवापादानत्वरूपतया नात्र पञ्चमीप्रसक्तिः, परंतु निरुक्तापकर्षावधित्वविवक्षायां 'नमःस्वस्ती'त्यादिसूत्रेण चतुर्थ्येव विहितेति भावः । एवं च श्रीकृष्णावधिकस्वापकर्षबोधानुकूलो मदीयो व्यापार इत्युक्तवाक्याच्छाब्दबोधः, उच्चारयितृव्यापारस्यैव नमःशब्दार्थत्वात् । यद्यप्येवं सति 'नारायणं नमस्कृत्ये'त्यादावपि नारायणपदोत्तरं चतुर्थ्येवापेक्षिता न द्वितीया करोतिकर्मत्वस्य नारायणेऽसंभवेन नमःपदार्थस्यैव तत्कर्मकतया नमःपदार्थघटकापकर्षावधित्वस्यैव द्वितीयया बोधनीयत्वात्, तथापि तत्र लक्षणया नमस्कारानुकूलकृतिपर्यंतं करोत्यर्थः । नमःपदं तात्पर्यग्राहकमतो नमःपदयोगाभावान्न चतुर्थी । अपकर्षबोधनिरूपितापकर्षनिष्ठप्रकारतानिरूपितावधित्वनिष्ठप्रकारतानिरूपितप्रकारतारूपा विषयतैव द्वितीयार्थः । अतएव नमःपदस्य सार्थकत्वविवक्षया 'स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे'इत्यादौ चतुर्थ्येव न द्वितीयेति मन्तव्यम् । **षष्ठीतत्पुरुषभ्रममिति** । सकलप्रपञ्चहेतोरीश्वरस्य महीरुहबीजत्वमात्रकथनस्यानुचितत्वेन षष्ठीतत्पुरुषस्य भ्रममूलकत्वमिति भावः । **समवायिकारणत्वमिति** । वृक्षादिसमवायिकारण एव वृक्षादेर्बीजव्यवहारादिति भावः । यद्यपि बीजं वृक्षादेर्न समवायिकारणं बीजनाशानन्तरमेव तदवयवैरङ्कुरारम्भात् तथापि समवायिकारणत्वमपि समवायिकारणावयवकत्वमेव विवक्षितमतो नासङ्गतिः । ईश्वरे पूर्वोक्तप्रमाणाभावमेव व्युत्पादयन्नाह—**नहीति** । **लिङ्गाभावादिति** । ईश्वरसाधकलिङ्गाभावादित्यर्थः । उपमानस्य शक्तिमात्रसाधकत्वेन तन्निराकरणं न कृतमित्यवधेयम् ।

---

१ ईश्वरे. २ ईश्वरः बाह्यप्रत्यक्षाविषयः अरूपिद्रव्यत्वादित्यनुमानम्. ३ संदेहविषयत्वात्.

**नच तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसि-**

दिनकरी ।

**मनुमानरूपं प्रमाणम् । तथा क्षित्यङ्कुरादिकमपीति ।** नन्वत्र किं पक्षतावच्छेदकं, न तावत् क्षितित्वं, अङ्कुरादेरपि क्षितित्वेन पृथक् तदुपादानवैयर्थ्यात् । किंच क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादौ अंशतः सिद्धसाधनम् । अवच्छेदकावच्छेदेन तथात्वे, परमाणौ बाधः, जन्यक्षितित्वस्य पक्षतावच्छेदकत्वे परमते जन्यपदव्यावृत्त्यसिद्धिस्तन्मतेऽजन्यक्षितेरभावात्, जन्यत्वस्यैव तथात्वसंभवेन पक्षतावच्छेदककोटौ क्षितित्वस्य व्यर्थत्वाच्च । नच तदपि संभवति, पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गादिति चेन्न । स्वरूपसंबन्धविशेषरूपकार्यत्वस्यैव पक्षतावच्छेदकत्वात् । प्रागभावप्रतियोगित्वरूपकार्यत्वस्यैव हेतुत्वेन तयोरैक्याभावात् । साध्यं च

रामरुद्री ।

तथा क्षित्यङ्कुरादिकमपीति मूले क्षित्यङ्कुरादीनां पक्षत्वं सूचितं तथाच क्षित्यङ्कुरादावनुगतं पक्षतावच्छेदकं किमित्याशङ्कते—**नन्वत्रेति । अङ्कुरादेरपीति ।** तथाच क्षितित्वस्यैव पक्षतावच्छेदकत्वे अङ्कुरस्यापि क्षितित्वेनाङ्कुरादेः पृथगुपादानमनर्थकमिति भावः । **नन्वत्र** क्षितिपदं न पृथिवीत्वजात्यवच्छिन्नपरं येनाङ्कुरादेरुपादानं व्यर्थं स्यात् अपितु भूमण्डलपरमेव, तथाच भूमण्डलाङ्कुरादीनां सर्वेषां पक्षत्वलाभे सर्वानुगतं पक्षतावच्छेदकं किमित्याशङ्कायां पृथिवीत्वमेव तथेत्युक्तौ नाङ्कुरादेः पृथगुपादानवैयर्थ्यमत आह—किं **चेति । अवच्छेदकावच्छेदेनेति । तथात्वे ।** साध्यसिद्धेरुद्देश्यत्वे इत्यर्थः । तथाचावच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकतया न सिद्धसाधनमिति भावः । **परमते ।** चार्वाकमत इत्यर्थः । **जन्यपदेति ।** तैरप्रत्यक्षत्वेन नित्यपृथिव्यनङ्गीकारादिति भावः । **ननु** पक्षतावच्छेदककोटिप्रविष्टविशेषणानां सर्वमते प्रयोजनमपेक्षितमिति न नियमस्तथा च नित्यपृथिव्यां बाधवारकतयैव जन्यपदं सार्थकमित्यत आह—**जन्यत्वस्यैवेति । नन्वस्तु** जन्यत्वमेव पक्षतावच्छेदकं किं नरिछन्नमत आह–**नच तदपीति ।** ऐक्यप्रसङ्गादिति । **ननु** पक्षतावच्छेदकहेत्वोरैक्ये को दोषः । नच व्याप्तिग्रहदशायामेव पक्षतावच्छेदकीभूतहेतौ साध्यसामानाधिकरण्यस्य सिद्धत्वेन सिद्धसाधनमेव दोष इति वाच्यम् । हेतुः साध्यसमानाधिकरण इति व्याप्तिग्रहस्य हेतुमान्साध्यवानि-

---

१ क्षित्यङ्कुरादिकर्तृत्वेन. २ क्षितिपदोपादान. ३ अस्तु सिद्धसाधनं को दोष इति चेत्तद्दशायां साध्यसंशयरूपपक्षताया असत्वेन अनुमितिर्न स्यादिति भावः.

रामरुद्री ।

त्यनुमितितो भिन्नाकारत्वात् समानाकारकसिद्धेरेवानुमितिप्रतिबन्धकत्वात् अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्यमात्रावगाहिसिद्धेरप्रतिबन्धकत्वाच्च । यद्यप्यवच्छेदकावच्छेदेन अनुमितौ सामानाधिकरण्यादधिकं पक्षतावच्छेदकव्यापकत्वमेव साध्ये भासते व्याप्तिज्ञानेपि साध्ये हेतुव्यापकत्वं भासत एवेति तुल्यं तथापि व्याप्तिग्रहे व्यापकत्वं प्रकारतयैवानुमितौ तु साध्यीयसंसर्गघटकतया भासत इति भेदाच्चेति चेन्न । उद्देश्यतावच्छेदकविधेययोरैक्येनोपनयवाक्याच्छाब्दबोधानुपपत्तेरेव दोषत्वात् । नच नवीनमते विधेयांशेऽधिकावगाहिनः शाब्दबोधस्योपगमेन पक्षतावच्छेदकहेत्वोरैक्येपि साध्यव्याप्यहेतुमान्पक्ष इत्याकारकस्योपनयवाक्यजन्यशाब्दबोधस्य नानुपपत्तिरिति वाच्यम् । प्राचीनैरुदाहरणवाक्यादेव व्याप्तिलाभादुपनयेनापि तत्[1]प्रतिपादने पौनरुक्त्यमिति पक्षे हेतुमत्तामात्रमेवोपनयेन बोधनीयम् । [2]तथाचायमित्युपनयवाक्यस्य हेतुमान्पक्ष इत्येवार्थ इत्यङ्गीकारात्तन्मता[3]नुसारेणैव पक्षतावच्छेदकहेत्वोरैक्यादिति दूषणाभिधानादिति ध्येयम् । **स्वरूपसंबन्धरूपेति ।** [4]यद्यपि स्वरूपसंबन्धरूपकार्यताव्यक्तीनां तत्तद्व्यक्तिमात्रपर्यवसन्नत्वेन नानुगतपक्षतावच्छेदकलाभस्त[5]थाप्यन्यतमत्वेनानुगतीकृतानां पक्षतावच्छेदकत्वमिति भावः । **प्रागभावप्रतियोगित्वेति ।** नच प्रतियोगित्वस्यापि स्वरूपसंबन्धस्वरूपतया तत्तद्धर्मिव्यक्तीनामैक्येन पक्षतावच्छेदकहेत्वोरैक्यापरिहार इति वाच्यम् । अभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्या[6]चार्यमताभिप्रायानुसारेण संयोगेन घटाभा[7]वात्समवायेन घटाभावस्य भेदः प्रतियोगिताभेदादेव समर्थनीयः प्रतियोगिप्रतियोगितावच्छेदकयोरैक्यात् । किंच स्वरूपसंबन्धरूपप्रतियोगितायाः प्रतियोगिघटव्यक्तेश्चैक्येन भेदो दुरुपपाद एवेति [8]तयोर्भेदो न स्यादतो विषयत्वस्येव प्रतियोगित्वस्यापि पदार्था[9]न्त[10]रत्वमेवाङ्गीकरणीयं सप्तधापदार्थविभागस्तु तत्वज्ञानोपयोगिज्ञानविषयाणामेवेति न तद्विरोधोऽपीति नवीनमताभिप्रायेणैतदभिधानम् । **वस्तुतस्तु** प्रागभावप्रतियोगित्वरूपकार्यत्वस्य हेतुत्वादिति ग्रन्थस्य प्रतियोगिताख्यस्वरूपसंबन्धेन प्रागभावस्य हेतुत्वादित्यर्थे तात्पर्यान्न कोऽपि दोष इति ध्येयम् । **वस्तुतस्तु** क्षित्यङ्कुरादिकमिति मूलस्य क्षितित्वस्याङ्कुरत्वस्य तद्घटत्वस्य पक्षतावच्छेदकत्वे तात्पर्यं, तत्र क्षितिः सकर्तृकेति प्रथमप्रयोगे क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे घटादावंशतः सिद्धसाधनं, प[11]क्षतावच्छेदकावच्छेदेन त[12]थात्वे तु परमाणौ बाध इत्यतोऽङ्कु[13]रत्वस्य पक्षतावच्छेदकत्वानुधावनं, तत्र च सामानाधिकरण्येन साध्यसिद्धेरु-

---

१ व्याप्तिः. २ तथाशब्दस्य केवलहेतुमत्परत्वादिति भावः. ३ प्राचीनमतानुसारेण. ४ शङ्कते यद्यपीति. ५ समाधत्ते तथापीति. ६ उदयनाचार्यैः. ७ संयोगसंबन्धावच्छिन्नप्रतियोगिताकघटाभावात्. ८ समवायसंबन्धावच्छिन्नप्रतियोगिताकघटाभावस्य. ९ समवायसंबन्धावच्छिन्नघटाभावसंयोगसंबन्धावच्छिन्नप्रतियोगिताकघटाभावयोः. १० सप्तपदार्थापेक्षया अतिरिक्तपदार्थत्वम्. ११ क्षितित्वावच्छेदेन. १२ साध्यसिद्धेरुद्देश्यत्वे. १३ अङ्कुरपक्षकानुमाने.

रामरुद्री ।

देश्यत्वे क्वाप्यङ्कुरे जीवीयकृतिसाध्यत्वाभावेन नांशतः सिद्धसाधनं नवा बाधो नित्याङ्कुरस्याभावादिति भावः । नंनु[1] क्षितित्वावच्छेदेनाङ्कुरत्वावच्छेदेन वा कार्यत्वहेतुना सकर्तृकत्वानुमितिर्न संभवति कार्यत्वरूपहेतोरप्रयोजकत्वात्[2] । नच कार्यत्वं यदि कृतिजन्यत्वव्यभिचारि स्यात्तदा कृतिजन्यतावच्छेदकं न स्यादित्यनुकूलतर्कसत्वान्नाप्रयोजकत्वमिति वाच्यम् । कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावेनोक्ततर्कानवतारात् । न चान्वयव्यतिरेकावेव मानमिति वाच्यम् । कुलालकृतिसत्वे घटस्तदभावे घटाभाव इति विशिष्यै[3]वान्वयव्यतिरेकग्रहात्, तन्तुवायकृतिकाले घटोत्पत्त्यापत्तिवारणाय कुलालकृतित्वेन घटत्वेन विशिष्य कार्यकारणभावस्यावश्यकत्वेन सामान्यतः कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावात् । नच यद्विशेषयोरिति निय[4]म एव मानमिति वाच्यम् । तस्याप्यप्रयोजकत्वात् । नच कार्यसामान्याभावे कुलालादिकृत्यभावकूटस्य प्रयोजकत्वे गौरवं, कृतित्वावच्छिन्नाभावस्यैकस्य तथात्वे[5], लाघवम् । तच्च कृतित्वस्य कारणतावच्छेदकत्वमन्तरा न संभवति, कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकधर्मावच्छिन्नाभावप्रयोजकत्वात्, तथाच लाघवमूलक एव यद्विशेषयोरित्यादिन्याय इति वाच्यम् । कारणतावच्छेदकधर्मावच्छिन्नाभाव एव कार्याभावे, प्रयोजक इति न नियमः, किंतु स्वरूपसंबन्धरूपप्रयोजकत्वं प्रतीत्यनुरोधेन लघ्वनतिप्रस[6]क्तधर्मावच्छेदेन कल्प्यत इति नियमः । तथाच लाघवादेव कारणतानवच्छेदककृतित्वावच्छिन्नप्रतियोगिताकैकाभावस्य कार्याभावप्रयोजकत्वं कृतित्वेन कार्यत्वेन कार्यकारण[7]भावमन्तरापि सूपपादमेवेति तत्र प्रमाणाभाव एवेत्यभिप्रेत्यादिपदमुपात्तं । तेन सर्गाद्यकालीनघटनिष्ठतद्व्यक्तित्वावच्छिन्नस्योपसंग्रहार्त्तद्व्यक्तौ[8] कुलालकृतिजन्यत्वस्य साधनीयत्वात्, कुलालकृतित्वेन घटत्वेन कार्यकारणभावसत्वेन तत्राप्रयोजकत्वशङ्काविरहादिति भावः । न चैवमीश्वरस्य कुलालत्वापत्तिरिति वाच्यम् । घटकरणसमर्थस्यैव कुलालत्वेनेश्वरे तस्येष्टत्वात्[9] । अतएव[10] 'नमः कुलालेभ्यः कर्मारेभ्यश्चे'त्यादिश्रुतिरपि संगच्छते । यदिच सर्गाद्यघटस्य विवादग्रस्तत्वेन सर्गाद्यकालीनस्य घटस्य पक्षत्वे पक्षाप्रसिद्धिरिति मन्यते, तदास्तु खण्डघट एवादिपदार्थः, तत्पूर्वमपि कुलालकृत्यसत्वेन तत्पक्षकानुमानेनेश्वरसिद्धेरावश्यकत्वादिति युक्तमुत्पश्यामः । व्यक्तीभविष्यति चेदमुपरिष्टात् । नंनु[11] सकर्तृकत्वं कर्तृजन्यत्वमेव वाच्यम् । तच्च न संभवति, कर्तुर्जनकत्वेऽनन्तकृतिव्यक्तीनां कारणतावच्छेदकत्वापत्त्या गौरवात्, लाघवेन स्वरूपतः कृतित्वजातेरेव कारणतावच्छेदकत्वादित्याशङ्कां निराकुर्वन्प्राचीनमतनिराकरणपूर्वकं

---

१ शंकते. २ व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वात्. ३ विशेषरूपेण. ४ यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि कार्यकारणभाव इति नियमः. ५ तथात्वे प्रयोजकत्वे. ६ अनतिप्रसक्तत्वं तदभाववदवृत्तित्वम्. ७ कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नं कारणमिति कार्यकारणभावं विना. ८ सर्गाद्यकालीनघटव्यक्तौ. ९ ईश्वरस्य कुलालत्वे इष्टापत्तावेव. १० दीधितिकृतस्त्वित्याद्युरित्यन्तदिनकरीग्रंथेनेति भावः. ११ अवतारयति.

दिनकरी ।

न स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वं, कार्यमात्रं प्रति कृतेरेवान्वयव्यतिरेकाभ्यां हेतुत्वेन तज्जनकज्ञानचिकीर्षयोस्तत्रान्यथासिद्धत्वेन तत्रितयजन्यत्वरूपसाध्यस्य तत्र बाधात्, दृष्टान्तपक्षसाधारणस्य स्वत्वस्यैकस्याभावेन तद्घटितस्वोपादानगोचरेत्यादिसाध्यस्यासंभवात्, कृतित्वापेक्षयोपादानगोचरकृतित्वस्य गौरवेण जनकतानवच्छेदकत्वाच्च । किंतु विशेष्यतासंबन्धावच्छिन्नकृतित्वावच्छि-

रामरुद्री ।

स्वमतेन सकर्तृकत्वं निर्वक्[1]कुमारभते—साध्यं चेति। नित्यज्ञानेच्छाकृतिमानेवेश्वरः सकर्तृकत्वानु[2]मानेन साधनीयः। अ[3]न्यथा ईश्वरे नित्यज्ञानेच्छयोरसिद्धिप्रसङ्गादतः सकर्तृकत्वमुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यत्वरू[4]पमेव साधनीयं, तथाचैतदनुमानेन नित्यज्ञानेच्छाकृतीनां सिद्धौ त[5]त्पक्षकगुणत्वहेतुकानुमानेन लाघवादेकद्रव्याश्रितत्वसिद्धौ तदे[6]वं द्रव्यमीश्वर इति नित्यज्ञानेच्छाकृतिमानेक ईश्वरः सिद्ध्यतीति प्राचामभिप्रायः । तत्र बाधादिति। कार्यरूपपक्षे बाधादित्यर्थः । नन्वन्वयव्यतिरेकाभ्यां ज्ञानचिकीर्षयोर्हेतुतासिद्धौ व्यापारत्वेनैव कृतेः कार्यमात्रं प्रति कारणत्वमिति व्यापारेण व्या[7]पारिणो नान्यथासिद्धिरिति न्यायविरोधेन कृत्या तयोर्नान्यथासिद्धिरित्यत आह—दृष्टान्तेति । असंभवादिति । दृष्टान्तपक्षवृत्तिसाध्यद्वयगतानुगतसाध्यतावच्छेदकाभावादिति भावः । ननु तर्हि स्वेति परित्याज्यमेव, यदि चान्व[8]यव्यतिरेकाभ्यां कृतेरेव प्रथमतः कार्यमात्रे हेतुत्वमवधार्यते त[9]ज्जनकत्वेनैव ज्ञानचिकीर्षयोरनु[10]मानमित्याप्रहस्तदास्तु तयोरप्यन्यथासिद्धत्वं, तथाप्युपादानगोचरकृतिजन्यत्वस्यैव सकर्तृकत्वस्य साध्यत्वान्नास्माकं कापि क्ष[12]तिरित्याशङ्कायामाह—कृतित्वापेक्षयेति। स्व[13]मतेन सकर्तृकत्वं निर्वक्ति—किंत्विति। विशेष्यतासम्बन्धावच्छिन्नेत्यस्य प्रयोजनं तेनेत्यादिना स्व[14]यमेव वक्ष्यति। कृतित्वावच्छिन्नत्वोपादानं तु सविषयकत्वेन कृतेः कारणत्वे ज्ञानेच्छयोर्नान्यथासिद्धिः संभवति त[15]योरपि सविषयकत्वेन कारणत्वात्, स्वेन तु तयोरन्यथा-

१ निर्वचनेच्छाधीनेच्छाविषयारम्भानुकूलकृतिमानिति बोधः. २ क्षित्यङ्कुरः कर्तृजन्यः कार्यत्वादित्यनुमानेन. ३ नित्यज्ञानेच्छाकृतिमदीश्वरस्यासाधने. ४ स्वजन्यत्वसंबन्धेन उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतीनां साध्यत्वम्. ५ उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतयः (एक)द्रव्याश्रिताः गुणत्वात् इति अनुमानेन. ६ नित्यद्रव्यमेव. ७ व्यापारवतः कारणस्य. ८ कृतिसत्त्वे कार्यसत्त्वं कृत्यभावे कार्याभाव इति अन्वयव्यतिरेकाभ्यां. ९ निश्चितं भवति. १० कृतिः. ११ ज्ञानचिकीर्षे कृतिसमानाधिकरणे कृतिजनकत्वादित्यनुमानम्. १२ दोषः. १३ टीकाकर्तृमते. १४ दिनकरीकार एव. १५ अपरोक्षज्ञानचिकीर्षयोरपि.

दिनकरी।

न्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वं, तेनादृष्टद्वाराऽस्मदीयकृतिजन्यत्वस्य पक्षे सत्वेपि न सिद्धसाधनम्। यदिच कार्यमात्रे कृतित्वेनेवान्वयव्यतिरेकाभ्यां ज्ञानत्वेनेच्छात्वेन च हेतुत्वं स्वीक्रियते तदा तादृशज्ञानजन्यत्वमिच्छाजन्यत्वं कृतिजन्यत्वं वा साध्यमस्तु। यत्तु कर्तृजन्यत्वमेव साध्यमिति तन्न। कार्यमात्रे कर्तृत्वेन जनकत्वे मानाभावाल्लाघवात्कृतित्वेनैव तत्र हेतुत्वात्। ननु कार्ये विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताशालि, प्रागभावप्रतियोगित्वादित्यनुमानं फलितं, तत्रच ध्वंसे

रामरुद्री।

सिद्धत्वस्यैवाङ्गीकरणीयत्वादित्यभिप्रायेण। कार्यत्वे समवायसंबन्धावच्छिन्नत्वप्रवेशस्तु यदुपादानिका प्रवृत्तिस्तत्रैव समवायेन कार्यमिति नियमस्य तन्त्वादौ घटापत्तिवारकस्य निर्वाहायैवेति बोध्यम्। **न सिद्धसाधनमिति**। तादृशजनकतायाः स्वजन्यादृष्टसंबन्धावच्छिन्नतया विशेष्यतासंबन्धानवच्छिन्नत्वादिति भावः। **नन्वेवं**[1]**मुक्तानुमानेन** नित्यकृतिसिद्धौ तत्र द्रव्याश्रितत्वानुमानेन[2] नित्यकृतिमदीश्वरसिद्धावपि तस्मिन्[3]नित्यज्ञानं नित्येच्छा च न सिद्ध्येत्। नच कृतिं प्रति ज्ञानचिकीर्षयोर्हेतुत्वेन कृत्या तयोरीश्वरे[4]ऽनुमानमिति[5] वाच्यम्। कार्येणैव कारणानुमानसंभवेन नित्यकृतेः कार्यत्वाभावादनुमानेन तत्सिद्ध्यसंभवादित्याशयेन ज्ञानेच्छयोः सिद्ध्यर्थं प्रकारान्तरमनुसरति—**यदिचेति**। स्वमतेऽन्वयव्यतिरेकाभ्यां कृतेरेव कार्यमात्रे हेतुता यः करोति स जानाति स इच्छतीति व्याप्त्या जन्यकृत्या तत्कारणत्वेन ज्ञानचिकीर्षयोः कल्पनं[6] नित्यकृतेरजन्यतया तया ज्ञानचिकीर्षयोरनुमानं न संभवत्येव। परंतु यः सर्वज्ञ[7] इत्यादिश्रुत्यैव ज्ञानेच्छयोः सिद्धिर्वाच्येति स्वमतमभिप्रेत्य यदि चेत्युक्तं। **कृतिजन्यत्वं वेति**। विनिगमनाविरहादिति भावः। तथाच सकर्तृकत्वानुमानेनैव ज्ञानेच्छाकृतीनां त्रयाणामेवेश्वरे सिद्धिरिति भावः। **यत्त्विति। मानाभावादिति**। ननु स्वनिष्ठ[8]कृतिविशेष्यतासंबन्धेन यत्र कर्ता तत्र समावायेन कार्यमित्यन्वयव्यतिरेकावेव मानमित्यत आह—**लाघवादिति। ननु** जन्यत्वावच्छेदेन समवायसंबन्धावच्छिन्नकृतिजन्यत्वसाधने ध्वंसादौ साध्यविरहेण बाधो व्यभिचारश्चेत्याशङ्कितुं पर्यवसितपक्षसाध्यहेतूननुवदति—**नन्वि**[9]-

---

१ क्षित्यङ्कुरः नित्यकृतिजन्यः कार्यत्वादित्यनुमानेन. २ नित्यकृतिः द्रव्याश्रिता गुणत्वात् रूपवदिति अनुमानम्. ३ ईश्वरे. ४ ज्ञानचिकीर्षयोः. ५ ईश्वरः नित्यज्ञानचिकीर्षावान् नित्यकृतिमत्त्वात् यन्नैवं तन्नैवं यथा जीवः. ६ अनुमानम्. ७ यः सर्वज्ञः स सर्ववित्. आदिना सोऽकामयतेत्यादिपरिग्रहः. ८ स्वं कर्ता. ९ ध्वंसान्तर्भावेन हेतौ समवायसंबन्धावच्छिन्नकृतिजन्यत्वाभाववद्वृत्तित्वसत्त्वादिति भावः.

दिनकरी ।

पक्षतावच्छेदकजन्यत्वाक्रान्ते विशेष्यतासंबन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यत्वरूपसाध्यस्याभावाद्वाध इति चेन्न । सत्वविशिष्टजन्यत्वस्यैव ध्वंसव्यावृत्तस्य पक्षतावच्छेदकत्वोपगमात् । नच हेत्वधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम् । सत्ववैशिष्ट्यस्य हेतौ विशेषणात्[1] । अथैवंरीत्या व्यभिचारवारणेपि ध्वंसस्य कृतिजन्यत्वे मानाभावेन कार्यमात्रस्य कृतिजन्यत्वप्रवादो व्याहन्येतेति चेन्न । तादृशप्रवादस्य निर्युक्तिकत्वेनाश्रद्धेयत्वात् । यद्वा[2] जन्यत्वमात्रं ध्वंससाधारणमेव पक्षतावच्छेदकं, कृतिजन्यत्वमात्रं साध्यं, एवंच हेतावपि सत्ववैशिष्ट्यं नोपादेयं प्रयोजनाभावात् । एवं च ध्वंसेपि ईश्वरीयकृतिजन्यत्वस्य निराबाधतया कार्यमात्रे कृतिजन्यत्वप्रवादोप्युपपद्यत इति । नच कृतिजन्यत्वमात्रस्य साध्यत्वेऽदृष्टद्वारा हविरादिगोचरास्मदीयकृतिजन्यत्वमादाय सिद्धसाधनमिति वाच्यम् । अदृष्टाद्वारकत्वेन कृतिजन्यताया विशेषणीयत्वादिति दिक् । एतादृशानुमितौ लाघवज्ञानसहकारेण

रामरुद्री ।

**स्यादिना** । सर्वसिद्धप्रवादस्याश्रद्धेयत्वमसहमानः कल्पान्तरमाह[3]—**यद्वेति** । अथात्र कृतिनिष्ठजनकतानिरूपितादृष्टाद्वारकजन्यत्वस्य साधने कारणतावच्छेदकसंबन्धः कार्यतावच्छेदकसंबन्धश्च पूर्वोक्त एव । तथाच ध्वंसे न कृतिजन्यत्वरूपसाध्यसिद्धिः संभवति । नच विशेष्यतासमवायाभ्यां कश्चित्कार्यकारणभावोऽन्यस्तु विशेष्यताविशेषणताभ्यामिति ध्वंसेपि कृतिजन्यत्वसिद्धिः संभवत्येवेति वाच्यम् । उपादानत्वाख्यविशेष्यता[4]संबन्धेनैव कृतेः कारणत्वस्याङ्गीकरणीयतया ध्वंसस्योपादानविरहेण तं प्रत्युक्तविशेष्यतासंबन्धेन कारणत्वासंभवादिति चेन्न । कालनिष्ठप्रत्यासत्त्यैव[5] कार्यमात्रं प्रति कृतेः कारणत्वस्योपगन्तव्यत्वादिति तात्पर्यात् । **लाघवज्ञानेति** । वह्निव्याप्यधूमवानिति-परामर्शाद्वह्नेर्महानसीयत्वे लाघवमिति लाघवज्ञानसहकृताद्यथा हि पर्वतो महानसी-

---

१ तथाच सत्वविशिष्टं कार्यं विशेष्यतासंबन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपितसमवायसंबन्धावच्छिन्नजन्यताशालिसत्वविशिष्टप्रागभावप्रतियोगित्वात् इति अनुमानं सिद्धम्. २ तादृशप्रवादस्य श्रद्धेयत्वाभिप्रायेणाह यद्वेति. ३ कल्पान्तरविषयकज्ञानानुकूलव्यापारानुकूलकृतिमान् ग्रन्थकारः. ४ कृतिनिरूपितविषयतात्रयं एका उपादानता अन्या विधेयता तृतीया उद्देश्यता इति तत्त्वम्. ५ कालिकसंबन्धेन.

दिनकरी ।

ज्ञानेच्छाकृतिषु, नित्यत्वमेकत्वं च भासते इति नित्यैकत्वसिद्धिः । अथेश्वरज्ञानादौ कीदृशमेकत्वमनुमित्या विषयीक्रियते । न तावत्संख्यारूपं, गुणे गुणानङ्गीकारात् । नच नित्यज्ञानत्ववन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपमेकत्वं तद्विषय इति वाच्यं, ईदृशैकत्वस्य नित्यज्ञानानुमितेःप्रागनुपस्थितत्वेन [1]तादृशानुमितौ भानासंभवादिति चेदत्र केचित्, [2]सामानाधिकरण्यसंबन्धेनैव ज्ञानादौ[3]वाश्रय[4]गतमेकत्वमनुमितौ भासते । यद्वा[5] द्वित्वासमानाधिकरणत्वरूपमेकत्वं तद्विषयः । नच जीवेश्वरगतद्वित्वसामानाधिकरण्यस्येश्वरज्ञानादौ [6]सत्वाद्बाध इति वाच्यम्, दुःखवद्वृत्तित्वेन द्वित्वस्य विशेषणीयत्वात् । नचैवमपि घटेश्वरगतद्वित्वसामानाधिकरण्यस्य तत्र सत्वाद्बाध इति वाच्यम्, आत्मानात्मवृत्तिभिन्नत्वेनापि द्वित्वस्य विशेषणीयत्वादित्याहुः । तन्न । ईश्वरे ज्ञानद्वयाङ्गीकारेऽप्येतादृशैकत्वभाननिर्वाहेणोद्देश्यासिद्धेः ।

रामरुद्री ।

यवह्निमानित्यनुमितिस्तथा कृतेरेकत्वे नित्यत्वे च लाघवमिति लाघवज्ञा[7]नसहकृतकृतिजन्यत्वव्याप्यकार्यत्ववानिति परामर्शा[8]त्तथैव नित्यैककृतिजन्यमित्याद्यनुमितिरिति भावः। ज्ञानेच्छाकृतिषु कीदृशमेकत्वमनुमित्या विषयीक्रियते इत्याशङ्कते—**अथेत्यादिना । नच नित्यज्ञानवन्निष्ठेति।** [9]एतादृशैकत्वज्ञानस्य फलं नित्यज्ञानवदीश्वरस्यैकत्वसिद्धिरिति भावः । **अत्र केचिदिति ।** नन्वाश्रयगतैकत्वस्य सामानाधिकरण्यसंबन्धेन ज्ञानेच्छादिषु भानोपगमेऽपि नेश्वरैकत्वसिद्धिः। ईश्वरनानात्वेपि तत्तदीश्वरगतज्ञानादिषु तत्तदीश्वरगतैकत्वस्य सामानाधिकरण्यसंबन्धेन भाने बाधकाभावादित्यस्वरसात्कल्पान्तरमाह–**यद्वेति । बाध इतीति ।** ईश्वरीयज्ञाने एकत्वबाध इत्यर्थः । **आत्मानात्मेति ।** अनात्मवृत्तिभिन्नत्वमात्रोपादाने दुःखवदवृत्त्यनात्मवृत्तिभिन्नद्वित्वाप्रसिद्धिः, ईश्वरगतद्वित्वस्यैव तथात्वसंभवेन तस्यानङ्गीकारात् । अत आत्मवृत्तित्वे सत्यनात्मवृत्ति यत्तद्भिन्नत्वमेव विशेषणमुपात्तम् । तथाच तादृशं द्वित्वं घटपटादिगतद्वित्वमेवेति नाप्रसिद्धिरिति भावः । **उद्देश्यासिद्धेरिति ।** ईश्वरे सर्वविषयकमेकमेव ज्ञानमिति सिद्ध्यर्थं हि ज्ञानादावेकत्वभानं स्वीक्रियते ईश्वरस्यैकत्वसिद्धावपि तदीयज्ञानादीनामेकत्वासि-

---

१ नित्यज्ञानानुमितौ. २ स्वसमवायिसमवायसंबन्धेन. ३ आदिना चिकीर्षाकृत्योरुपग्रहः. ४ ईश्वरगतैकत्वं. ५ साक्षात्संबन्धेन एकत्वान्वयानुरोधेन यद्वेतिकल्पारम्भः. ६ द्वित्वासमानाधिकरणत्वरूपैकत्वस्येत्यादिः. ७ ईश्वरे नित्यैककृतौ लाघवमिति लाघवज्ञानम्. ८ कार्यं नित्यैककृतिजन्यं इत्यनुमितिः. ९ कृतिनिष्ठनित्यैकत्वज्ञानस्य.

दिनकरी।

वस्तुतस्तु स्वाधिकरणावृत्तिस्वभिन्नज्ञानकत्वमेवैकत्वम्। एवमीश्वरेच्छाकृत्योरपि द्रष्टव्यम्। एवं च तादृशज्ञानादिसिद्धौ तत्र[2] गुणत्वेन

रामरुद्री।

द्धेरिति भावः। **स्वाधिकरणेति**। यत्रैकत्वं भासते तदेव स्वपदार्थः। अत्र च स्वभिन्नज्ञानत्वावच्छेदेन स्वाधिकरणावृत्तित्वं विवक्षणीयम्। अन्यथा[3] ईश्वरीयज्ञाननानात्वेपि स्वभिन्नजीवज्ञानादौ स्वाधिकरणावृत्तित्वसत्वेनेश्वरज्ञानादेरेकत्वासिद्धिप्रसङ्गात्। स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकत्वमेव ज्ञानगतमेकत्वमिति भावः। तच्च नित्यज्ञानैकत्व एव संभवति नतु तद्भेदेपीति द्रष्टव्यम्। अथाऽत्र नित्यज्ञानव्यक्तिरेव स्वपदार्थः तद्घटितं च निरुक्तैकत्वं नित्यज्ञानानुमितेः प्राक् दुर्ग्रहमिति कथं नित्यज्ञानानुमितौ तादृशैकत्वभानसंभवः विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात्। नच नित्यज्ञानानुमितेः पूर्वमपि ज्ञानत्वसामान्यलक्षणया प्रत्यासत्त्या निखिलज्ञानव्यक्तीनां ज्ञानं संभवत्येव कथमन्यथानुपस्थितज्ञानव्यक्तेस्तादृशानुमितौ विधेयतया भानसंभवः उक्तकार्यकारणभावस्य जागरूकत्वादिति वाच्यम्। एवमपि स्वभिन्नेत्यत्र स्वत्वं न ज्ञानत्वस्वरूपं, ज्ञाने ज्ञानत्वावच्छिन्नभेदासत्वेन स्वभिन्नज्ञानाप्रसिद्धिप्रसङ्गात्। अपितु नित्यज्ञाननिष्ठतद्व्यक्तित्वमेव तदिति वाच्यम्। तथाच तस्य प्रमेयत्वादिसामान्यलक्षणया सुग्रहत्वेपि स्वरूपतस्तद्व्यक्तित्वेन वा तस्य प्रकारत्वमसंभवि, स्वरूपतस्तत्प्रकारकज्ञाने स्वरूपतस्तद्विषयकज्ञानस्य तद्व्यक्तित्वविशिष्टप्रकारकज्ञाने च तद्व्यक्तित्वविशिष्टज्ञानस्य हेतुतया सामान्यलक्षणाजन्यज्ञानस्य च प्रमेयत्वादिसामान्यप्रकारकत्वनियमेन नित्यज्ञानानुमितेः पूर्वं तथाविधतद्व्यक्तित्वज्ञानासंभवेन नित्यज्ञानानुमितौ भेदप्रतियोगितावच्छेदकतया तद्व्यक्तित्वज्ञानासंभवस्य दुष्परिहरत्वादिति। मैवम्। एकव्यक्तिमात्रवृत्तिधर्म एव प्रकृते स्वत्वं। एकव्यक्तिमात्रवृत्तित्वं च स्वप्रतियोगिवृत्तित्व[4]स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वं। अनेन च रूपेण नित्यज्ञानानुमितेः पूर्वमपि तन्निष्ठतद्व्यक्तित्वस्य सामान्यलक्षणया सुग्रहत्वात्। नचैवमपि तद्व्यक्तिभेदस्य प्रतियोगितावच्छेदकं लाघवाच्छुद्धतद्व्यक्तित्वमेव, तस्य स्वरूपतो भानानङ्गीकारे तु तद्व्यक्तीतरावृत्तित्वविशिष्टमेव तत् तथा, नतूक्तोभयसंबन्धेन भेदविशिष्टभेदावच्छिन्नं, गौरवात्। तथा च तादृशभेदाप्रसिद्धिरिति वाच्यम्। तादृशभेदस्योपलक्षणतया प्रतियोगितावच्छेदकव्यावर्तकत्वोपगमात्। नचाभावप्रतियोगितावच्छेदककोटावुपलक्षणतया भानानङ्गीकारात् न तथोपगमसंभव इति वाच्यम्।

---

१ स्वाधिकरणवृत्तिस्वभिन्नज्ञानकं यद्यत्स्वं तत्तद्व्यक्तिभेदकूटवत्वमित्यर्थः। स्वं जीवज्ञानेच्छादि तत्कं यद्यत्स्वं तदेव तत्तद्व्यक्तिभेदकूटवत्वरूपैकत्वं ईश्वरज्ञाने एवं तदिच्छायामपि. २ ईश्वरज्ञानादौ. ३ उक्तविवक्षानादरे. ४ ज्ञाननिष्ठतद्व्यक्तित्वस्य स्वसामानाधिकरण्यसंबन्धेन घटभेदविशिष्टत्वात् तदन्यत्वं नास्तीत्यतः प्रथमसंबन्धः तत्रैव ज्ञानव्यक्तिभेदप्रतियोगिवृत्तित्वमादाय तद्दोषवारणाय स्वसामानाधिकरण्यम्.

**द्धिः । नच शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यं, अप्रयोजकत्वात्[1] । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव[2] एवानुकूलस्तर्कः, 'द्यावाभूमी जनयन् देव एकः' 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥**

दिनकरी ।

**हेतुना द्रव्याश्रितत्वे साधनीये[3] द्रव्यान्तरस्य बाधादीश्वर[4]सिद्धिरिति द्रष्टव्यम् । अप्रयोजकत्वादिति । अनुकूलतर्काभावादिति भावः । इदमुपलक्षणं । शरीराजन्यत्वहेतौ शरीररूपविशेषणस्यासिद्धिवारकस्यापि**

रामरुद्री ।

प्रतियोगितासंसर्गकबुद्धावेव तथाभाना[5]नङ्गीकारात्, प्रकृते च तथाविधभेद[6]विशिष्टावच्छिन्नप्रतियोगिताकाभावत्वेनैव नित्यज्ञानभेदस्य निवेशनीयत्वादिति सर्वमनाकुलम् । केचित्तूक्तवाक्यस्य[7] स्वसमानाधिकरणस्वभिन्नज्ञानकं यद्यत्तत्तदन्यत्वमेवार्थ इति नोक्तानुपपत्तिः । नच समासान्तर्गतनञ उत्तरपदार्थमात्रान्वयित्वं, न तु पूर्वपदार्थविशिष्टोत्तरपदार्थान्वयित्वं, तथासति नीलाप्रमेय इति वाक्यान्नीलप्रमेयभेदबोधापत्तिः । तथाच स्वाधिकरणावृत्तीत्यादिवाक्यादुक्तार्थलाभासम्भव इति वाच्यम् । घटानधिकरणमित्यादौ घटाधिकरणभिन्नप्रतीत्यर्थं समासान्तर्गतनञोपि यत्रोत्तरपदं ससंबन्धिकपदघटितं तत्र पूर्वपदार्थान्वितोत्तरपदार्थान्वितस्वार्थबोधकत्वस्याप्यङ्गीकरणीयत्वात् । अन्यथाऽधिकरणसामान्यभिन्नस्याप्रसिद्ध्या घटानधिकरणमित्यतः शाब्दबोधस्यैवानुपपत्तेरित्यपि वदन्ति । **एवमिति** । स्वाधिकरणावृत्तिस्वभिन्नेच्छाकत्वं[8] स्वाधिकरणावृत्तिस्वभिन्नकृतिकत्वमि[9]च्छाकृत्योरेकत्वमिति भावः । **नन्वेवमनुमानेन** नित्यैकज्ञानेच्छाकृतिव्यक्तीनां सिद्धावपि नेश्वरसिद्धिरित्याशङ्कायामाह—**एवंचेति** । द्रव्यान्तरस्य बाधादिति । ज्ञानादिकं न पृथिव्यादिवृत्ति चेतन[10]गुणत्वात् । नापि जीवात्मवृत्ति, नित्यज्ञानादित्वात् । जीवात्मनि तु नित्यज्ञानाद्यभावादित्येवं रीत्या द्रव्यान्तरस्य बाधादिति भावः । **अनुकूलतर्केति** । शरीराजन्यत्वकृत्यजन्यत्वयोरत्यन्ताभावरूपत्वेन नित्य-

---

१ व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वात्. २ कार्यत्वावच्छिन्नं प्रति कर्तृत्वावच्छिन्नं कारणमिति कार्यकारणभावः. ३ नित्यज्ञानं द्रव्याश्रितं गुणत्वादित्यनुमानेनेत्यर्थः. ४ तन्नित्यं ज्ञानं जीवावृत्तिनित्यज्ञानत्वात्. ५ उपलक्षणतया भानाङ्गीकारात्. ६ स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्व-उभयसंबन्धेन भेदविशिष्टान्यत्वरूपभेद. ७ स्वाधिकरणेत्यादिवाक्यस्य. ८ ईश्वरेच्छा. ९ ईश्वरकृतिः. १० रूपे व्यभिचारवारणार्थं चेतनपदम्. चेतनवृत्तित्वादित्युक्तौ द्रव्यत्वादौ व्यभिचारः । अतो गुणत्वादिति.

दिनकरी ।

व्यभिचारावारकत्वेन [1]व्यर्थतयातद्विशेषणावच्छेदेनव्याप्तिग्रहासंभवेन व्याप्यत्वासिद्धिश्चेत्यपि द्रष्टव्यम् । न च व्यर्थविशेषणत्वस्याधिकोक्त्या निग्रहस्थानत्वेपि [2]तज्ज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकत्वे मानाभाव इति वाच्यं, तथापि गुरुधर्मस्यानवच्छेदकतया साध्यसंबन्धितावच्छेदकधर्मवत्वरूपव्याप्तेस्तत्राभावेन व्याप्यत्वासिद्धेर्दुर्वारत्वादिति । तदुक्तमाचार्यैः "एकामसिद्धिं परिहरतो द्वितीयापत्ति"रिति । कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एवेति । नचान्वयव्यतिरेकाभ्यां घटत्वाद्यवच्छिन्नं

रामरुद्री ।

योर्व्याप्तिग्राहककार्यकारणभावरूपानुकूलतर्काभावादित्यर्थः । **तद्विशेषणावच्छेदेनेति** । व्यभिचारवारकविशेषणावच्छेदेनैव हेतौ व्याप्तिरङ्गीक्रियते न तु [3]तदवारकविशेषणावच्छेदेनेति भावः । **ननु** साध्यवदन्यावृत्तित्वादिकमेव व्याप्तिः । तेषां च धूमे धूमत्वावच्छेदेनेव नीलधूमत्वावच्छेदेनापि सत्वे न किंचिद्बाधकम् । वस्तुतस्तु भेदस्य सामानाधिकरण्यस्य वा किंचिदवच्छेदेन सत्वं किंचिदवच्छेदेन तदभाव इत्यत्र न किंचिदपि साधकं । अग्रे वृक्षः कपिसंयोगी न मूल इत्यादिवत्तत्साधकप्रतीतेरभावात् । नच धूमो धूमत्वेन वह्नेर्व्याप्यो न नीलधूमत्वेनेति प्रतीतिरेव तत्साधिकेति वाच्यम् । तत्रै[4]व विवादात् । नच व्यर्थविशेषणत्वज्ञानमेव तदवच्छेदेन व्याप्तिज्ञाने प्रतिबन्धकमिति व्यर्थविशेषणत्वज्ञानदशायां व्याप्तिरज्ञानरूपासिद्धिर्निष्प्रत्यूहै[5]वेति वाच्यम् । तादृशप्रतिबध्यप्रतिबन्धक[5]भावे मानाभावात् । नचैवं नीलधूमादिहेतुप्रयोक्तुर्निग्रहो न स्यादिति वाच्यम् । अधिकस्यापि निग्रहस्थानत्वेन तत्संभवादित्याशङ्कते—**नचेति** । **मानाभाव इतीति** । ग्राह्याभावाद्यनवगाहित्वादिति भावः । **व्याप्तेस्तत्राभावेनेति** । जन्यत्वाभावत्वापेक्षया शरीरजन्यत्वाभावत्वस्य गुरुत्वेन साध्यसामानाधिकरण्यानवच्छेदकत्वात् । स्वरूपसंबन्धरूपावच्छेदकत्वस्य गुरुधर्मे प्राचीनैरनङ्गीकारादितिभावः । **तदुक्तमिति** । [6]कुसुमाञ्जलाविति शेषः । **एकामसिद्धिमिति** । स्वरूपासिद्धिमित्यर्थः । **द्वितीयापत्तिरिति** । व्याप्यत्वासिध्यापत्तिरित्यर्थः । स्वरूपासिद्धिपरिहाराय हेतौ शरीरपदप्रवेशे तस्य व्यभिचारावारकत्वेन शरीराजन्यत्वत्वस्य साध्यसंबन्धितानवच्छेदकत्वेन व्याप्यत्वासिद्धिप्रसङ्गादिति भावः । इदं पुनरिहावधेयं । लघुधर्मेऽवच्छेदकत्वे संभवति गुरुधर्मे स्वरूपसंबन्धरूपमवच्छेदकत्वं न स्वीक्रियते 'संभवति लघौ गुरौ तदभावा'दिति दीधित्युक्तेः ।

---

१ हेतुकोटिप्रविष्टविशेषणानां व्यभिचारकतयैव सार्थक्यनियमादिति भावः २ व्यर्थः विशेषणत्वज्ञानस्य. ३ व्यभिचारावारक. ४ तादृशप्रतीतौ. ५ व्याप्तिज्ञानं प्रति व्यर्थविशेषणत्वज्ञानं प्रतिबन्धकमिति प्रतिबंध्यप्रतिबन्धकभावे. ६ उदयनाचार्यैरित्यादिः.

दिनकरी ।

प्रति कुलालादिकृतित्वेनैव हेतुत्वादेतादृशकार्यकारणभावे मानाभाव इति वाच्यम् । घटत्वपटत्वादिभेदेनानन्तकार्यकारणभावकल्पनापे-

रामरुद्री ।

प्रकृते च जन्यत्वसामान्याभावादतिरिक्त एव शरीरजन्यत्वाभावः । तन्निष्ठसाध्यसामानाधिकरण्ये च लघोरपि जन्यत्वाभावत्वस्य नावच्छेदकत्वसंभवः, तत्र तस्यासत्वात्, अन्यथा विशिष्टसत्तात्वस्यापि द्रव्यत्वत्वाद्यपेक्षया गुरुत्वेनानवच्छेदकत्वापातात् । नच जन्यत्वसामान्याभावत्वं जन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वे सत्यभावत्वं, जन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वं च न तत्पर्याप्तप्रतियोगितावच्छेदकताकत्वं, किंतु तन्निष्ठप्रतियोगितावच्छेदकताकत्वं, तथाच शरीरजन्यत्वाभावेपि तल्लक्षतमेवेति वाच्यम् । तथा सति घटवृत्तिजन्यत्वाभावस्य पटादौ सत्वेन व्यभिचारितया तादृशजन्यत्वाभावस्य कर्त्रजन्यत्वसाधकत्वानुपपत्तेः । अतएव न व्यर्थविशेषणतापि । स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटित एव तत्प्रसरात् । जन्यत्वाभावत्वशरीरजन्यत्वाभावत्वयोर्व्यधिकरणत्वात्, शरीरजन्यत्वाभावत्वस्य जन्यत्वाभावत्वेनाघटितत्वात्सर्वमिदमसंगतमिति प्रतिभाति, तथापि परमते शरीरजन्यत्वं नास्तीति यत्र प्रतीतिस्तत्र सर्वत्रैव कृतिजन्यत्वं नास्तीति प्रतीतिरभ्युपगम्यते । शरीराजन्यस्य कृतिजन्यपदार्थस्य तैरनङ्गीकारात् । समनियताभावयोश्च भेदे मानाभावेन भवति शरीरजन्यत्वाभावनिष्ठं कृतिजन्यत्वाभावत्वम् । एवं च कृतिजन्यत्वापेक्षया शरीरजन्यत्वत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगिताकाभावस्य तन्मतेऽप्रसिद्धया न तस्य हेतुतासंभव इति यावन्ति शरीरजन्यत्वानि तावत् प्रतियोगिताकाभावत्वेनैव हेतुता वाच्या । तथाच तदपेक्षया लघुभूतेन कृतिजन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वेनैव तस्य हेतुता युक्ता । तन्मते शरीराजन्यकृतिजन्यपदार्थानभ्युपगमेन तादृशाभावे कृतिजन्यत्वत्वावच्छिन्नप्रतियोगिताकत्वस्यैव तैरभ्युपगमसंभवादिति दूषणं सारमिति । **अन्वयव्यतिरेकाभ्यामिति** । कुलालकृतिसत्वे घटसत्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यामित्यर्थः । **कुलालादिकृतित्वेनैवेति** । यद्रूपावच्छिन्नयो रन्वयव्यतिरेकग्रहस्तद्रूपावच्छिन्नयोरेव कार्यकारणभावनियमादिति भावः । **एतादृशकार्यकारणभावे** । कृतित्वावच्छिन्नकारणत्वकार्यत्वावच्छिन्नजन्यत्वस्वरूपे । **मानाभाव इति** । अन्यथा घटत्वदण्डत्वादिना अन्वयव्यतिरेकग्रहादेव द्रव्यत्व–समवेतद्रव्यत्वाभ्यामेककार्यकारणभावकल्पनस्यैव युक्ततया, घटादिकं प्रति दण्डत्वादिना कारणताविलयप्रसङ्गात् । न चोक्तान्वयव्यतिरेकाभ्यां विशिष्यहेतुतासिद्धावपि कृतिसत्वे कार्यसत्वं

---

१ कर्तृत्वेन कार्यत्वेन कार्यकारणभावे. २ तत् जन्यत्वत्वम्. ३ जन्यत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वम्. ४ व्यर्थविशेषणत्वप्रसरात्. ५ यद्रूपावच्छिन्नयोरन्वयव्यतिरेकस्तद्रूपावच्छिन्नयोः कार्यकारणभावे.

### दिनकरी ।

**क्षया कार्यत्वावच्छिन्नं प्रति कृतित्वेनैक हेतुत्वकल्पनस्यैवोचितत्वात् । यद्विशेषयोरिति न्यायेन कार्यत्वकृतित्वाभ्यां सामान्यकार्यकारणभावस्यावश्यकत्वाच्च । नचैतादृशन्यायो निष्प्रमाणक इति वाच्यम् । कार्यत्वावच्छिन्नाभावे तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवात् कृतित्वावच्छिन्नाभावस्यैकस्य प्रयोजकत्वे लाघवादिति । केचित्तु**

### रामरुद्री ।

कृत्यभावे कार्याभाव इत्यन्वयव्यतिरेकाभ्यां, कार्यत्वकृतित्वाभ्यामपि कार्यकारणभावोऽवर्ज्य इति वाच्यम् । सृष्टिकाले कृतिसामान्याभावस्य कार्यसामान्याभावस्य चाप्यनिश्चयेन, प्रलये चास्मदादीनामभावेन च तादृशान्वयव्यतिरेकग्रहस्यैवासिद्धेः । यद्धर्मावच्छिन्नयोरन्वयव्यतिरेकसहचारग्रहस्तद्धर्मावच्छिन्नयोरेव कार्यकारणभावग्रह इत्यौत्सर्गिको नियमः इत्यभिप्रेत्याह—**एकहेतुत्वकल्पनस्यैवेति ।** प्रकृते घटत्वपटत्वकुलालकृतित्वतन्तुवायकृतित्वाद्यवच्छिन्नानन्तकार्यकारणभावे गौरवनिश्चयरूपबाधकसत्वात्, कार्यत्वकृतित्वाभ्यामेक **एव** कार्यकारणभावः कल्प्यत इति भावः । **ननु** तन्तुवायकृतिसत्वे घटोत्पत्तिवारणाय विशेषतोऽन्वयव्यतिरेकाभ्यां[1] घटत्वं[2]कुलालकृतित्वादिना विशेषकार्यकारणभावानामावश्यकत्वेन तादृशान्वयव्यतिरेकग्रहैः कार्यत्वकृतित्वाभ्यां सामान्यकार्यकारणभावान्तरकल्पनं निर्युक्तिकं सामान्यकार्यकारणभावकल्पनेऽपि तादृशगौरवस्याङ्गीकरणीयत्वादित्यतस्तत्साधकं हेत्वन्तरमाह—**यद्विशेषयोरिति ।** यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपीति न्यायः । मीमांसकमते चाक्षुषं प्रति रूपं, स्पार्शनं प्रति स्पर्शः, कारणं । बहिरिन्द्रियजन्यप्रत्यक्षसामान्ये न रूपं न वा स्पर्शः कारणं । प्रभावाय्वोः प्रत्यक्षे व्यभिचारात् । नापि गुणः कारणमतिप्रसङ्गात्[3] । नापि रूपस्पर्शान्यतरत्कारणमन्यतरत्वस्यापि गुरुत्वात्, विनिगमनाविरहेण गुरुतरकारणताद्वयप्रसङ्गाच्चेत्यतो न्याये असतिबाधक इत्युक्तम् । **आवश्यकत्वाच्चेति ।** व्याप्येन व्यापकनिश्चयादिति भावः[4] । **लाघवादिति ।** तथाचोक्तन्यायो लाघवमूलकत्वान्न निष्प्रमाणक इति भावः । नच कृतित्वस्य कार्यत्वावच्छिन्नं प्रति कारणतानवच्छेदकत्वेपि लाघवादेव कृतित्वावच्छिन्नाभावस्यैकस्य कार्यसामान्याभावप्रयोजकत्वं कल्पनीयमिति वाच्यम् । कारणतावच्छेदकधर्मावच्छिन्नाभावस्यैव कार्यतावच्छेदकावच्छिन्नाभावप्रयोजकतानियमादिति भावः । अतएव तादृशनियमे मानाभाव इत्यभिप्रायेण केषांचिन्मतमुत्थापयति—**के-**

---

१ कुलालकृतिसत्वे घटसत्वं कुलाल कृत्यभावे घटाभावइति अन्वयव्यतिरेकाभ्यां. २ घटत्वावच्छिन्नंप्रति कुलालकृतित्वावच्छिन्नं कारणमिति रीत्येत्यादिः. ३ गुणस्य परमाणौ सत्वात् तस्याप्रत्यक्षत्वादिति भावः. ४ प्रयोजनाभावेऽपि नियमबलेन तत्सिद्धिरिति भाव इति पाठान्तरम्.

दिनकरी ।

मास्तु कार्यत्वं कृतेः कार्यतावच्छेदकं, तथापि घटत्वाद्यवच्छिन्नं प्रति कृतेः कारणतया, सर्गाद्यकालीनघटादिकं पक्षीकृत्य घटत्वादिहेतुना सकर्तृकत्वसाधने जीवानां बाधादीश्वरसिद्धिरित्याहुः । **दीधितिकृतस्तु** कार्यत्वावच्छिन्नं प्रति कृतेर्हेतुत्वाभावेऽपि घटत्वाद्यवच्छिन्नं प्रति कृतेर्हेतुतया खण्डघटोत्पत्तेः पूर्वं कृतेरावश्यकतया तदाश्रयत्वेनेश्वरसिद्धिमाहुः । **नन्वेवंरीत्या** घटादि–कुलालादिचेष्टयोरन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति चेष्टात्वादिना हेतुत्वादङ्कुराद्युत्पत्तेः पूर्वं चेष्टानुरोधेनेश्वरस्य नित्यशरीरमपि सिद्ध्येदितिचेन्न । तादृशान्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति क्रियात्वेनैव हेतुत्वात्तत्र चेष्टात्वेन हेतुत्वे मानाभावात् । **आचार्यमते**ति ।

रामरुद्री ।

**चिन्त्विति । मास्त्विति ।** उक्तनियमे मानाभावेन तादृशकार्यकारणभावानङ्गीकारेऽपि लाघवादेव कृत्यभावस्य कार्याभावप्रयोजकत्वसम्भवादिति भावः । आहुरित्यस्वरसोद्भावनं । तद्बीजं तु परैः सर्गादेरेवानङ्गीकारेण तत्कालीनघटस्य पक्षत्वे पक्षाप्रसिद्धिरेव । वस्तुतस्तु खण्डघटं पक्षीकृत्य कुलालकृतिजन्यत्वसाधने जीवरूपकुलालकृतेर्बाधादीश्वरसिद्धिः, घटकरणसमर्थस्यैव कुलालत्वेन तादृशकुलालत्वस्येश्वरेपि स्वीकारसम्भवादत एव 'नमः कुलालेभ्य' इति श्रुतिरपि संगच्छते इति तु युक्तमुत्पश्यामः । वर्णयन्ति चैवमेव दीधितिकृतोपि । तदेवाह—**दीधितिकृतस्त्विति । नित्यशरीरमपीति ।** चेष्टावदन्त्यावयवित्वरूपशरीरत्वस्य नित्येष्वसंभवात्, अवयविमात्रस्य स्वमते विनाशित्वान्नात्रेष्टापत्तिः संभवतीति भावः। **चेष्टात्वेन हेतुत्वे मानाभावादिति ।** नन्वगृहीतव्यभिचारकलघुभूतव्याप्यधर्मान्तरसत्वे व्यापकरूपेण न कारणत्वमन्यथासिद्धेः । अन्यथा घटत्वावच्छिन्नं प्रति दण्डत्वेनेव द्रव्यत्वादिनापि कारणत्वापत्तेरित्यवश्यं चेष्टात्वेनैव कारणताङ्गीकरणीयेत्यस्वरसादाचार्यानुयायिनां मतमुत्थापयति । **आचार्येति । वैजात्याङ्गीकारादिति ।** तथाच परमाणुक्रियारूपचेष्टाबलादेव द्व्यणुकादिरूपतत्तत्कार्योत्पत्तिसंभवेन तदनुरोधेन नेश्वरस्य परमाण्वतिरिक्त-

१ अनुमानं तु सर्गाद्यकालीनघटः सकर्तृकः घटत्वात् इदानींतनघटवदिति. २ खंडघटानुकूलकृत्याश्रयत्वेन. ३ चेष्टासत्वे कार्यसत्वं चेष्टाभावे कार्याभाव इति-अन्वयव्यतिरेकौ. ४ कार्यत्वावच्छिन्ने. ५ उदयनाचार्याः. ६ कार्यत्वावच्छिन्नं प्रति प्रवृत्तित्वादिरूपव्याप्यधर्मसत्वे कृतित्वेनापि कारणत्वं न स्यादत उक्तमगृहीतेति । कार्यत्वावच्छिन्नं प्रति जन्यकृतित्वरूपव्याप्यधर्मसत्वे कृतित्वेनापि कारणता न स्यादत उक्तं लघ्विति ।

दिनकरी ।

**तानुयायिनस्तु** अस्तु चेष्टात्वेन तत्र हेतुत्वं, अस्तु च तदनुरोधेनेश्वरस्य नित्यं शरीरं, तथापि नेश्वरस्यातिरिक्तशरीरसिद्धिः परमाणूनामेव तच्छरीरत्वोपगमात् । एवंचेश्वरकृतिजन्यचेष्टावद्भिः परमाणुरूपशरीरैरेव तत्तत्कार्याणामुत्पत्तिः, परमाणुक्रियायां चेष्टात्वरूपवैजात्याङ्गीकाराच्छरीरलक्षणेन्त्यावयवित्वस्यानिवेशाच्च न परमाणूनां शरीरत्वानुपपत्तिः । नच नानापरमाणूनां शरीरत्वकल्पने गौरवाल्लाघवेन तस्यातिरिक्तत्वसिद्धिरिति वाच्यम्, तच्छरीरस्य महत्त्वेऽभुग्नस्य तस्य पाषाणादौ प्रवेशासंभवेन पाषाणान्तर्वर्तिभेकशरीरोत्पादकतानुपपत्तेः । अणुत्वे च दूरस्थकार्योत्पादकत्वानुपपत्तेरित्याहुरित्यलं पल्लवैरिति । यत्तु पूर्वोक्तस्थापनानुमाने शरीरज-

रामरुद्री ।

शरीरसिद्धिरितिभावः । **ननु** शरीरक्रियाया एव चेष्टात्वेन परमाणौ च चेष्टावदन्त्यावयवित्वरूपशरीरत्वविरहेण कथं परमाणुक्रियायां चेष्टात्वाङ्गीकारसंभवः, द्रव्यान्तरानारम्भकत्वे सत्यवयवित्वमेव हि अन्त्यावयवित्वं, तच्च परमाणौ न संभवति, परमाणोर्द्व्यणुकारम्भकत्वादवयवित्वाभावाच्च । चेष्टावत्त्वमात्रस्य शरीरलक्षणत्वे तु हस्तादावपि शरीरमिति व्यवहारापत्तिरित्याशङ्कायामाह—**शरीरलक्षण इति । शरीरत्वानुपपत्तिरिति** । तथाच हस्तादौ शरीरव्यवहारे इष्टापत्तिरेवेति भावः । यद्वा शरीरलक्षणेऽन्त्यावयवित्वस्थाने द्रव्यारम्भकावयविभिन्नत्वमेवोपादेयं तथाच हस्तादौ न शरीरत्वव्यवहारापत्तिस्तस्य शरीररूपद्रव्यारंभकत्वात् । न वा परमाणूनां शरीरत्वानुपपत्तिस्तेषामवयवित्वाभावादिति तु परमार्थः । **अतिरिक्तत्वसिद्धिरितीति** । नानाधिकरणेष्वभावत्वकल्पने गौरवात् यथाधिकरणातिरिक्ताभावसिद्धिर्लाघवात्, तद्वत्प्रकृतेपीति भावः । **दूरस्थकार्येति** । ईश्वरस्याणुरूपैकशरीराङ्गीकारे तच्चेष्टया युगपन्नानादूरदेशस्थकार्योत्पत्तेरसंभवाद्देशान्तरस्थचेष्टया देशान्तरस्थावयवेषु क्रियोत्पत्तेरसंभवादिति भावः । **स्थापनानुमान इति** । जन्यं कृतिजन्यं कार्यत्वादित्यनुमान इत्यर्थः । जन्यं कृत्यजन्यं

---

१ चेष्टावत्वे सति अन्त्यावयवित्वरूपशरीरलक्षणानाक्रान्तात् कथं परमाणोः शरीरत्वमत आह–शरीरलक्षणे इति. २ ईश्वरशरीरस्य. ३ ईश्वरशरीरस्य. ४ क्षित्यङ्कुरः कर्तृजन्यः कार्यत्वादित्यनुमाने. ५ घटादावतिव्याप्तिवारणाय प्रथमदलं, हस्तादावतिव्याप्तिवारणाय अन्त्यावयवित्वरूपं द्वितीयं दलम्. ६ हस्तेति व्याप्तिवारणाय सत्यन्तम्, गुणेतिव्याप्तिवारणाय विशेष्यम्. ७ हस्तवारणं कथमितिचेत्तत्राह तथाचेति. ८ हस्तस्य अलक्ष्यत्वाभिप्रायेण यद्वेति कल्पान्तरम्.

दिनकरी ।

न्यत्वमुपाधिः तस्य घटादौ साध्यव्यापकत्वात् अङ्कुरादौ साधनाव्यापकत्वाच्च । नचाङ्कुरादौ सकर्तृकत्वरूपसाध्यसंदेहेनोपाधेः साध्यव्यापकत्वसंशयान्नोपाधित्वनिश्चय इति वाच्यम्, तथापि संदिग्धोपाधित्वस्य दुर्वारत्वात् । नचोपाधिसंदेहाहितो व्यभिचारसंदेहः पक्षीयव्यभिचारसन्देह एव [3]स च न प्रतिबन्धक इति वाच्यं, पक्षतत्समयोर्व्यभिचारसंशयस्यापि प्रतिबन्धकत्वादत एवानुकूलतर्कविरहदशायां पक्षेतरत्वं सन्दिग्धोपाधिरित्यभिधानं ग्रन्थ-

रामरुद्री ।

शरीराजन्यत्वादिति सत्प्रतिपक्षस्यापि पूर्वमुद्भावितत्वेन तद्व्यावृत्त्यर्थं स्थापनपदम् । स्वव्यवस्थापनीयसाध्यसाधकमिति तदर्थः । **साधनाव्यापकत्वाच्चेति** । इदंच स्वमतानुसारेण, [4]आचार्यानुयायिनां मते त्वंकुरादेरपि परमाणुरूपेश्वरशरीरजन्यत्वादिति मन्तव्यम् । **संदिग्धोपाधित्वस्येति** । उपाधिनिश्चये हि हेतौ सोपाधिकत्वहेतुना व्यभिचारनिश्चय एव संभवति । उपाधिसंदेहे च व्यभिचारसंदेह आवश्यकः, व्याप्यसंदेहेन व्यापकसंदेहस्यानुभवसिद्धत्वात् । व्यभिचारस्य हि ज्ञान[5]सामान्यं व्याप्तिज्ञानप्रतिबन्धकमिति संदिग्धोपाधित्वस्यापि दूषकत्वादिति भावः । **ननू**पाधिसंदेहाहितो व्यभिचारसंदेहः पक्षान्तर्भावेणैवांगीकरणीयः । घटादौ साध्यनिश्चयेन साध्यसन्देहासंभवात् । स च न व्याप्तिज्ञानप्रतिबन्धकः पक्षान्तर्भावेण व्यभिचारसंदेहस्य तदप्रतिबन्धकत्वात् । [6]अन्यथानुमितेः पूर्वं सर्वत्रैव पक्षे साध्यसंदेहसंभवेन तत्र च हेतोर्निश्चयादनुमानमात्रोच्छेदापत्तिप्रसंगः स्यात्, तस्मात् साध्याभावांशे निश्चयात्मकं वृत्तित्वांशे संशयनिश्चयसाधारणं व्यभिचारज्ञानमेव प्रतिबंधकमित्यास्थेयम् । प्रकृते च तादृशव्यभिचारसंदेहासंभवात्कथं संदिग्धोपाधेर्दूषकत्वमित्यभिप्रेत्याशङ्कते—**नचेति** । **पक्षतत्समयोरिति** । पक्षः उद्देश्यतावच्छेदकावच्छिन्नः । तत्समस्तु तद्भि[7]न्नत्वे सति साध्यसन्देहाक्रान्तस्तयोरित्यर्थः । **प्रतिबन्धकत्वादिति** । नचैवमुक्तरीत्यानुमानमात्रोच्छेदापत्तिरिति वाच्यम् । धूमो यदि वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यादित्यनुकूलतर्केण व्यभिचारसन्देहस्याप्यसम्भवादिति भावः । प्रकृतार्थे ग्रन्थकृतां सम्मतिमाह—

---

१ उक्तोपाधेः. २ शरीरजन्यत्वं साध्यव्यापकं न वेति संशयः. ३ पक्षीयव्यभिचारसंदेहः. ४ उदयनाचार्यानुयायिनाम्. ५ षष्ठ्यर्थः विषयकत्वं ज्ञानसामान्यान्वयि तथाच व्यभिचारविषयकज्ञानसामान्यमित्यर्थः. ६ प्रतिबन्धकत्वस्वीकारे. ७ पर्वतो वह्निमान् धूमादित्यत्र साध्यसंदेहाक्रान्तत्वं पर्वतस्यापीति पर्वतवारणार्थं भिन्नत्वान्तं साध्यसन्देहानाक्रान्तवारणाय साध्यसंदेहाक्रान्त इति.

दिनकरी ।

कृतां सङ्गच्छत इति । तन्न । कार्यत्वेन कृतित्वेन कार्यकारणभावरूपस्यानुकूलतर्कस्य सत्वेन कार्यत्वरूपहेतोः साध्यव्याप्यत्वनिश्चयेन साध्यव्याप्याव्यापकत्वेनोपाधौ साध्याव्यापकत्वनिश्चयादिति । एवंचोक्तानुमानेनेश्वरसिद्धौ[1] तदुच्चरितत्वेन वेदस्य प्रामाण्यनिश्चयाद्वेदोपि[2] ईश्वरे प्रमाणमित्याह । **द्यावाभूमी जनयन्निति** । **इत्यादय इति** । आदिना 'ईश्वरमुपासीत' 'यः सर्वज्ञः स सर्ववित्' 'यस्य ज्ञानमयं तपः' 'सोऽकामयत' इत्यादीनां परिग्रहः । कार्यानुमानं चोपलक्षणम् । सर्गाद्यकालीनद्व्यणुकप्रयोजकं कर्म प्रयत्नजन्यं कर्मत्वात् । गुरुत्ववतां पतनाभावः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः धृतित्वात् पक्षिपतनाभाववत्, ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वात् घटनाशवत्, घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात्, आधुनिककल्पितलिप्यादिवत्, वेदजन्यप्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या शाब्दप्रमात्वात् चैत्रवाक्यजन्यप्रमावत्, वेदः असंसारिपुरुषप्रणीतः वेदत्वात्, वेदः पौरुषेयः वाक्यत्वात्, यन्नैवं तन्नैवं यथा काव्यमिति व्यतिरेकदृष्टान्तः भारतवत्, द्व्यणुकपरिमाणजनिका

रामरुद्री ।

**अतएवेति** । **अनुकूलतर्कस्य सत्त्वेनेति** । अनुकूलतर्काभावाहितव्यभि[3]चारसन्देहस्यैव व्याप्तिनिश्चयप्रतिबन्धकत्वादिति भावः । **निश्चयादिति** । उपाधित्वसन्देहासम्भवादिति शेषः । नन्वनुमानस्यैवेश्वरसाधकत्वे तत्प्रतिपा[4]दकोपनिषद्भागस्याध्ययनवैफल्यमित्याशङ्कामपनेतुं वेदस्यापि प्रमाणताबोधकं मूले द्यावाभूमी इत्यादिश्रुतिप्रदर्शनमवतारयति—**एवमिति** । **यः सर्वज्ञ इति** । सामान्यरूपेण सर्वविषयकज्ञानवानित्यर्थः । सामान्यरूपेण सर्वविषयकज्ञानवत्वं जीवानामपीत्यतः सर्वविदिति । विशेष[5]रूपेणापि सर्वविषयकज्ञानवानित्यर्थः । तपः । चान्द्रायणादिवत्पापक्षयसाधनमित्यर्थः । **कार्यानुमानमिति** । कार्यपक्षकानुमानमित्यर्थः । कार्यायोजनेत्यादिकारिकायामपि कार्यादिपदं तत्पक्षकानुमानपरम् । अत्रच ब्रह्माण्डनाशः प्रयत्नजन्य इत्यनुमानस्य कृत्यनुमानद्वारा ईश्वरसाधकत्वं, घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्य इत्याद्यनुमानं

---

१ क्षित्यङ्कुरः कर्तृजन्यः कार्यत्वादित्यनुमानेन. २ वेदः प्रमाणं ईश्वरोच्चरितत्वादित्यनुमानेन वेदविशेष्यकप्रमाणत्वप्रकारकनिश्चयादित्यर्थः. ३ विशिष्टं. ४ ईश्वरप्रतिपादक. ५ तत्तद्व्यक्तित्वरूपेण.

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्[1] ।**
**समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥**

पदार्थान्विभजते[2] । द्रव्यमिति[3] । अत्र[4] सप्तमस्याभावत्वक-

दिनकरी ।

संख्या अपेक्षाबुद्धिजन्या एकत्वान्यसंख्यात्वा[5]दित्यनुमानान्तराण्यपि साक्षात्परंपरया वा ईश्वरसाधकानि बोध्यानीति । तदुक्तम्—'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय'इति ॥ १ ॥ आयोजनं कर्म । पद्यते गम्यते अनेनेति पदं व्यवहार इति संक्षेपः । मूले[6] शिष्यावधानाय प्रतिजानीते[7]—**द्रव्यं गुण इति** । निरूप्यन्ते इति शेषः । संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्ति इति भूषणकारमतं निराकर्तु तथेत्युक्तम् । यथा गुणः पृथक् पदार्थः तथा कर्मापीत्यर्थः । अभावोऽधिकरणात्मक एवेति प्राभाकरमतं दूषयितुं पुनस्तथेत्युक्तम् । युक्तिश्चाग्रे वक्ष्यते । यद्यपि विभागवाक्यस्य न्यूनाधिकसंख्याव्यवच्छेदकतयैव सप्तत्वसङ्ख्या लब्धा तथापि सप्तग्रहणं स्पष्टार्थम् । नन्वन्ये पदार्थाः कुतो नोक्ता इत्यत आह—**कीर्तिता इति** । तथा चैतेभ्योऽन्ये[9] पदार्थाः न सन्त्येव कणादप्रभृतिभिरनुक्तत्वादिति भावः ।

रामरुद्री ।

तु साक्षादीश्वरसाधकमिति विभागो बोध्यः । **प्रतिजानीत इति** । स्वकर्तव्यत्वेन[10] निर्देशः प्रतिज्ञा । द्रव्यं गुण इत्यादिकारिकायां द्रव्यादिनिरूपणे स्वकर्तव्यत्वाप्रतिपादनात्प्रतिजानीत इत्यसङ्गतमतः शेषं पूरयति—**निरूप्यन्त इतीति** । **न्यूनाधि-**

१ विशेषणसहितं सविशेषं सविशेषमेव सविशेषकमिति विग्रहेण परमाणूनां परस्परभेदसाधकत्वरूपविशेषविशिष्टो विशेष इत्यर्थो लभ्यते, तथाच विशेषपदार्थानङ्गीकारे परमाणूनां परस्परभेदसिद्धिरेव न भवतीति तादृशभेदसिध्यर्थं विशेषपदार्थोऽङ्गीकर्तव्य इति भावः. २ विभागो नाम सामान्यधर्मव्याप्य–अनेकपरस्परविरुद्धधर्मप्रतिपादकः शब्दः. ३ जातौ एकत्वान्वयाभिप्रायेणैकवचनं एवमग्रेपि गुण इत्यादौ. ४ अस्यां कारिकायाम्. ५ एकत्वान्यत्वे सति संख्यात्वात् एकत्वे व्यभिचारवारणार्थं विशेषणदलं, घटे व्यभिचारवारणार्थं विशेष्यं. ६ कारिकायाम्. ७ भविष्यत्कालीनकर्तव्यत्वप्रकारकज्ञानजनकः शब्दः प्रतिज्ञा प्रतिपूर्वकज्ञाधातोरर्थः. ८ निषेधासिध्यर्थफलया. ९ शक्तिसादृश्यादयः. १० तृतीयार्थः प्रकारत्वं तथाच स्वकर्तव्यत्वप्रकारज्ञानजनकः शब्दः प्रतिज्ञेति बोध्यम्.

**थनादेव षण्णां भावत्वं प्राप्तं[1] तेन पृथगुपन्यासो[2] न कृतः । एते[3] च पदार्थाः वैशेषिके[4] प्रसिद्धाः नैयायिकानाम[5]प्यविरुद्धाः, प्रतिपादितं चैवमेव भाष्ये। अत[6] एवोपमानचिन्तामणौ सप्तपदार्थ[7]भिन्नतया शक्तिसादृश्यादीना[8]मतिरिक्तपदार्थत्व[9]मा-**

दिनकरी ।

**नन्वितरेषु ग्रन्थेषु षड्भावपदार्थाः सप्तमस्त्वभाव इति निरूपितं तथैवात्र कुतो न निरूपितमित्याशङ्क्याह—मुक्तावल्यां सप्तमस्येति । अत्र समवायैकार्थसमवाया[10]न्तरसम्बन्धेन सत्तावत्त्वं भावत्वं, तदभावोऽभावत्वमिति । प्राप्तं अर्थात्प्राप्तं । तेन प्राप्तत्वेन । पृथगुपन्यास इति। भावत्वेनोपन्यास इत्यर्थः । तेषामिति शेषः । नन्वन्ये**

रामरुद्री ।

**कसंख्येति** । तद्व्यवच्छेदार्थमेव विभागकरणादिति भावः । **कुतो न निरूपितमिति** । पदार्थो द्विविधः भावोऽभावश्च द्रव्यादयः षड्भावाः शेषस्त्वभाव इति रीत्या कुतो न निरूपितमित्यर्थः । **मूले[11] सप्तमस्येति**। यद्यपि सप्तमस्याभावत्वकथनेऽपि तदितरेषां भावत्वं दुर्लभमेव, नह्येकस्य ब्राह्मणत्वे प्रतिपादिते तदितरेषां सर्वेषामब्राह्मणत्वं प्रतिपादितं भवति, तथाप्येतस्य विभागवाक्यतया परस्परा[12]संकीर्णव्याप्यधर्मकथनस्यैव विभागरूपतया द्रव्यादीनामभावत्वेऽभावत्वं विभाजकमेव न स्यादिति द्रव्यादीनामभावत्वाभावात्परिशेषाद्भावत्वं प्राप्तमिति भावः । **समवायेति** । यद्यपि समवायस्य न समवायघटितसामानाधिकरण्येन सत्तावत्त्वं स्वरूपसम्बन्धेनैव तस्य वृत्तिस्तथापि समवायत्वस्य संसर्गतानवच्छेदकत्वेऽपि स्वरूपत्वेन समवायस्यैव स्वसंबन्धत्वेन न तस्य समवायेन वृत्तित्वक्षतिरिति मन्तव्यम् । **अर्थात्प्राप्तमिति** । अनुमानात्प्राप्तमित्यर्थः । अनुमानं च

---

१ वाचकपदं विनाऽपि उपस्थितमित्यर्थः । तेनेति । उपस्थितत्वेनेत्यर्थः. २ भावोऽभावश्चेति भावत्वेनाऽपि पृथगुपन्यासः. ३ द्रव्यादयः. ४ कणादसूत्रतद्भाष्यादिषु । ५ गौतमानुयायिनां. ६ द्रव्यत्वाद्यभावत्वान्तधर्माणां पदार्थविभाजकत्वस्वीकारादेव. ७ द्रव्यत्वादिसप्तान्यतमप्रतियोगिताकभेदवत्तयेत्यर्थः. ८ शक्तित्वसादृश्यत्वयोरित्यर्थः. ९ पदार्थविभाजकधर्मत्वमित्यर्थः, तथाच शक्तित्वसादृश्यत्वयोः प्रमाणत्वादिपदार्थविभाजकधर्मभिन्नत्वविशिष्टपदार्थविभाजकधर्मत्वाशंकामकृत्वा द्रव्यत्वादिपदार्थविभाजकधर्मभिन्नत्वविशिष्टपदार्थविभाजकधर्मत्वाशङ्कया द्रव्यत्वादीनामेव पदार्थविभाजकत्वं तदनुमतमिति लभ्यत इति भावः. १० स्वसमवायिसमवाय. ११ मुक्तावल्यां. १२ असंकीर्णाः विरुद्धाः. व्याप्या न्यूनवृत्तयः, ये धर्मास्तेषां कथनं बोधकः शब्दः.

दिनकरी।

पदार्थाः कथं न सन्ति न्यायसूत्रे षोडशपदार्थनिरूपणादित्याशङ्क्य नैयायिकानामपि मते सप्तपदार्था इत्यविरुद्धं षोडशपदार्थानां सप्तपदार्थेषु अन्तर्भूतत्वादित्याह—**एते चेति**। उक्तार्थे भाष्यसम्मतिमाह—**प्रतिपादितं चेति**। **एवमेवेति**। द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोडशानामत्रैवान्तर्भावादिति प्रतिपादितमित्यर्थः। कथमन्तर्भाव इति चेदित्थं, प्रमाणस्येन्द्रियादेः द्रव्ये, व्याप्तिज्ञानादेर्गुणे, प्रमेयस्यात्मशरीरेन्द्रियस्वरूपस्य द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दस्वरूपस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, दोषाणामिच्छाद्वेषमिथ्याज्ञानस्वरूपाणां रागद्वेषमोहपदप्रतिपाद्यानां गुणे, प्रेत्य मृत्वा भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्मत्वं प्रेत्यभावपदप्रवृत्तिनिमित्तं, चरमप्राणशरीरसंयोगध्वंसो मरणं, आद्यशरीरप्राणसंयोगो जन्म, तथा च मरणानन्तरं तादृशसंयोगरूपस्य तस्य गुणे, सुखदुःखसंवेदनस्वरूपस्य मुख्यफलस्य गुणे, गौणमुख्यसाधारणजन्यमात्रस्वरूपफलस्यापि द्रव्यादिषु, पीडालक्षणस्य दुःखस्य गुणे अन्तर्भावः। अपवर्गस्तु आत्यन्तिकी दुःखनिवृत्तिः। दुःखानि, शरीरं षडिन्द्रियाणि षट् विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिः। तत्र दुःखत्वजातिशून्ये शरीरादौ दुःखसम्बन्धितया गौणं दुःखत्वं,

रामरुद्री।

द्रव्यादयो भावा अभावत्वव्यधिकरणधर्मवत्त्वादित्येवं रूपम्। नच द्रव्यत्वादौ विभाजकधर्मेऽभावत्ववैयधिकरण्यमेवाप्रसिद्धमिति वाच्यम्। परस्परासमानाधिकरणव्याप्यधर्मरूपेण यावतां सामान्यवतां प्रतिपादनस्यैव विभागरूपतया द्रव्यत्वादीनामभावत्वसामानाधिकरण्ये तेषां विभाजकत्वस्यैवानुपपत्तेरिति भावः। **चरमेति**। प्राणशरीरसंयोगे चरमत्वं च स्वैसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधिकरणत्वम्, एवमाद्यत्वमपि तथाविधप्राणसंयोगध्वंसानधिकरणत्वमिति बोध्यम्। **गौणमिति**। लाक्षणिकमित्यर्थः। दुःखत्वं दुःखपदप्रतिपाद्यत्वं।

---

१ सप्तपदार्थे षोडशपदार्थान्तर्भावे. २ प्रमाणप्रमेयेत्यादिगौतमसूत्रोक्तानाम्। ३ स्वं यच्छरीरप्राणसंयोगस्य चरमत्वं तच्छरीरं। जातिश्चैकक्षणवृत्तिपदार्थद्वयावृत्तिरेव ग्राह्या। साच चैत्रीययावच्छरीरवृत्तिश्चैत्रत्वादिरेवमुत्तरत्रापि तथाच न पृथिवीत्वादिजातिमादाय दोष इति।

दिनकरी ।

**स्वर्गादिसुखस्यापि तन्नाशज्ञानेन दुःखसम्बन्धित्वमव्याहतमेव । नचैकविंशतिदुःखान्तर्गतयोर्मनःश्रवणयोर्नित्यत्वात् कथं तन्नाश इति वाच्यम् । यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखत्वं तद्रूपस्य कर्णशष्कुल्या नाशे तद्विशिष्टश्रवणेन्द्रियरूपदुःखनाशात् । एवमात्मसंयोगरूपव्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखहेतुतया दुःखत्वं, [1]व्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाशसंभवादिति । दुःखनिवृत्तावात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वम् । नन्वे[2]तादृशदुःखध्वंसस्य मुक्तित्वे कथं तत्त्व[3]ज्ञानसाध्यता तस्येति चेत्, इत्थं, तत्त्व[4]ज्ञानेन मिथ्याज्ञानवासनानाशः, वासनानाशे च दोषस्य वासनाविशिष्टरागादेरभावः विशेषणाभावेविशिष्टाभावात्, तादृशरागादिरूपहेत्वभावे च प्रवृत्तेर्धर्माधर्मरूपाया अभावोनुत्पत्तिः, तदनुत्पादे प्रारब्धकर्माधीनदेहान्यदेहसंबन्धरूपजन्माभावः, भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्नकर्मनिवृत्तिरिति । जन्माभावे दुःखानुत्पा-**

रामरुद्री ।

दुःखसंबन्धस्तु जनकत्वादिरूप इति भावः । **ननु** दुःखसंबन्धित्वा[5]द्दुःखत्वं सुखे न संभवति तस्य दुःखासंबन्धित्वात् । नच सुखस्यापि दुःखसमानाधिकरणत्वा[6]त्तत्त्वमक्षतमिति वाच्यम् । तथासत्यात्यन्तिकदुःखनिवृत्तेरपि पूर्वतनदुःखसमानाधिकरणत्वेन दुःखत्वापत्तेः । न चात्यन्तिकदुःखनिवृत्तेः स्वसमानाधिकरणदुःखासमानकालीनत्वात्स्वसमानाधिकरणदुःखसमानकालीनत्वादिरूपो दुःखसंबन्धो नोक्तनिवृत्ताविति नतत्रदुःखत्वं, अस्मदादिसुखे च तादृशदुःखसमानकालीनत्वात्तदक्षतमेवेति वाच्यम् । तथापि स्वर्गीयसुखे 'यन्न दुःखेन संभिन्न'-मित्यादिश्रुतिविरोधेनतथात्वस्य स्वीकर्तुमशक्यतया दुःखत्वं न संभवत्येवेत्याशङ्कामपनेतुमाह । **स्वर्गादिसुखस्येति** । तथाच यन्न दुःखेनेत्यादिश्रुतौ दुःखपदं स्वर्गनाशज्ञानजन्यदुःखातिरिक्तदुःखपरमिति न विरोध इति भावः । **व्यापारनाशेनेति** । मनःक्रियया मनःसंयोगरूपव्यापारनाशेनेत्यर्थः । यद्यपि भाविमुक्तिदशायामपि मनःसंयोगान्तरं वर्तत एव तथापि तस्य न व्यापारत्वं पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगस्यैव ज्ञानसाधनत्वेन तथात्वान्मुक्तौ च

१ आत्ममनःसंयोगनाशेन. २ आत्यन्तिकदुःखनिवृत्तेरित्यर्थः. ३ पदार्थतत्त्वज्ञानसाध्यता. ४ पदार्थतत्त्वज्ञानेन. ५ दुःखसंबन्धित्वप्रयोज्यदुःखत्वम्. ६ दुःखत्वम्. ७ आत्यन्तिकदुःखनिवृत्तिः. ८ स्वसमानाधिकरणदुःखसमानकालीनत्वस्य. ९ तादृशदेशश्च देह एवेति भावः.

दिनकरी ।

दः, तथाच स्वसमानाधिकरणदुःखासमानकालीनत्वस्वरूपविशेषणांशे तत्त्वज्ञानस्य प्रयोजकत्वान्मुक्तेस्तत्त्वज्ञानसाध्यत्वं, तथाच सूत्रं—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति। अस्यार्थः—पठितेषु जन्मादिषु मध्ये उत्तरोत्तराणामपाये तदनन्तराभावादव्यवहितपूर्वाभावात् । तथाच तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशः तेन प्रवृत्तेरनुत्पादः तेन दोषाणां नाशः तेन जन्मानुत्पादस्तेन दुःखानुत्पाद इति पूर्वोक्त एवार्थः पर्यवसितः । एकविंशतिदुःखनाशस्तु स्वकारणसाध्यो, न तत्र तत्त्वज्ञानस्य प्रयोजकतेति वदन्ति। नव्यास्तु योग्यविभुविशेषगुणनाशं प्रति स्वोत्तरवर्तिगुणानां कारणत्वात् स्वोत्तरोत्पन्नगुणेनैव दुःखध्वंसरूपमुक्तिसंभवेन न तत्र

रामरुद्री ।

शरीराभावादिति भावः । **स्वसमानाधिकरणेति** । शुकादिमुक्तावव्याप्तिवारणाय स्वसमानाधिकरणत्वनिवेशः । इदानींतनास्मदादिदुःखध्वंसेऽतिव्याप्तिवारणायासमानकालीनत्वान्तनिवेशः । **नन्वे**तावता चरमदुःखध्वंसो मुक्तिरित्यायातं चरमदुःखस्यापि योग्यविभुविशेषगुणत्वेन स्वानन्तरोत्पन्नविशेषगुणमात्रेणैव नाशसंभवान्मुक्त्यर्थं तत्वज्ञानापेक्षा न स्यादित्याशङ्कते—**नन्वित्यादिना** । सूत्रार्थमाह—**अस्यार्थ इति** । **नन्व**नन्तरपदस्योत्तरार्थकतया दुःखाभावे[१] जन्माभावस्य प्रयोजकत्वं न स्यात्, दुःखजन्मेत्यादिसूत्रपठिते जन्माभावे प्रवृत्त्यभावस्याप्रयोजकतया सूत्रार्थानुपपत्तिश्चेत्याशङ्कानिरासायानन्तरपदस्याव्यवहितपूर्वार्थकतामाह—**अव्यवहितपूर्वाभावादिति** । वदन्तीत्यस्वरसोद्भावनं, तद्बीजं तु विशेष्याप्रयोजकस्यापि विशेषणांशप्रयोजकतामादाय विशिष्टप्रयोजकत्वोपगमे वह्निर्धूमप्रयोजक इति वद्वह्निर्धूमवत्पर्वतप्रयोजक इति व्यवहारापत्तिरेव। **स्वोत्तरवर्तिगुणानामिति**। उत्पत्तिसंबन्धेन स्वोत्तरवर्त्तिविशेषगुणानामित्यर्थः । तेन स्वस्यापि स्वोत्तरवर्त्तित्वेपि न ज्ञानादीनां क्षणिकत्वापत्तिः, नवा[२] द्वितीयक्षणोत्पन्नघटादिसंयोगेनैवापेक्षाबुद्धेर्नाशापत्तौ द्वित्वादीनां[३] क्षणत्रयावस्थायित्वासंभवेन स्वोत्पत्तिद्वितीयक्षणोत्पन्ननिर्विकल्पकेन स्वे[४]तृतीयक्षण एव द्वित्वप्रत्यक्षस्य वक्तव्यतया तदानीं च द्वित्वाभावात्तत्प्रत्यक्षानुपपत्तिः । नच प्रत्यक्षे विषयस्य कारणत्वेपि द्वितीयक्षणे द्वित्वसत्वात्तृतीयक्षणे तत्प्रत्यक्षोत्पत्तौ किं बाधकमिति वाच्यम्। प्रत्यक्षे विषयस्य कार्यकालवृत्तितया कारणत्वात्, नाशोत्पत्तिक्षणे प्रतियोगिप्रत्यक्षस्यानुभवविरुद्धत्वात्, द्वित्वादीनां क्षणत्रयावस्थायित्वे तु तृतीयक्षणे द्वित्वप्रत्यक्षे न काप्यनुपपत्तिः। नच विशेषगुणत्वेन कारण-

१ स्वोक्तविशेषपदस्य फलमाह नन्वेति. २ आदिना त्रित्वपरिग्रहः ३ स्वं द्वित्वादि. ४ स्वं द्वित्वम्. ५ द्वित्व. ६ निरूपितत्वं सप्तम्यर्थः अन्वयश्चास्य प्रयोजकत्वे तथाच दुःखाभावनिरूपितप्रयोजकत्वं जन्माभावस्य न स्यादित्यर्थः.

दिनकरी।

तत्त्वज्ञानापेक्षेति दुःखपदं दुःखसाधनदुरितपरतया व्याख्येयं, दुरितस्य च योग्य[1]गुणत्वाभावान्न स्वो[2]त्तरवृत्तिगुणनाश्यतेति तन्नाशरूपमुक्तेस्तत्त्वज्ञानसाध्यत्वमेवेत्याहुः। तथा चैतादृशापवर्गस्या[3]भावे, संशयस्य गुणे। साध्यतया इच्छा[4]विषयरूपप्रयोजनस्य यथायथं द्रव्यादिषु। साध्यसाधनोभयवत्तानिश्चयविषयस्य दृष्टान्तस्य यथायथं द्रव्यादिषु। तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य द्रव्यादिषु। शब्दस्वरूपप्रतिज्ञाद्यन्यतमरूपाणामवयवानां गुणे। व्याप्यारोपेण व्यापकारोपस्य तर्कस्य गुणे। निर्णयस्य गुणे। तत्त्वबुभुत्सोः कथारूपवादस्य गुणे। विजिगीषुकथारूपजल्पस्य गुणे। स्वपक्षस्थापनाहीनकथारूपवितण्डायाः गुणे। अनुमितितत्कारणज्ञानान्यतर[5]प्रतिबन्धकज्ञानविषयरूपाणां हेत्वाभासानां यथायथं द्रव्यादिषु। अभिप्रायान्तरेण प्रयुक्तशब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानरूपस्य छलस्य गुणे। असदुत्तररूपजातेर्गुणे। पराजयहेतुस्वरूपनिग्रहस्थानानां यथायथं

रामरुद्री।

त्वेपि द्वित्वोत्पत्तिक्षणोत्पन्नज्ञाना[6]दिनाऽपेक्षाबुद्धिनाशे तृतीयक्षणे द्वित्वनाशापत्त्या द्वित्वप्रत्यक्षानुपपत्तितादवस्थ्यमिति वाच्यम्। द्वित्वाद्युत्पत्तिक्षणे विशेषगुणोत्पत्त्यनङ्गीकारात्। विशेषगुणं प्रत्युत्पत्तिक्षणावच्छिन्नद्वित्वा[7]दिप्रतिबन्धकतामङ्गीकृत्यैव द्वितीयक्षणे तदनङ्गीकारसम्भवादिति ध्येयम्। नचैवमपि सुषुप्तिप्राक्कालोत्पन्नविशेषगुणानां नाशानुपपत्तिरिति वाच्यम्। तत्रागत्या स्वोत्तरवर्तित्वविशिष्टस्य स्वस्यैव नाशकत्वाभ्युपगमात्। सर्वत्र स्वोत्तरवृत्तित्वेन नाशकत्वे अपेक्षाबुद्धेस्तृतीयक्षणे स्थायित्वानुपपत्तिरिति बोध्यम्। वस्तुतस्तु प्रकृते स्वोत्तरवर्तित्वं स्वध्वंसाधिकरणक्षणवृत्तित्वमेव। तथाच समवायेन नाशकत्वाभ्युपगमेऽपि प्रतिबंधकत्वाकल्पने क्षत्यभावेन लाघवात्॥ **दुरितपरतयेति**। तथाच पापध्वंस एव मुक्तिर्न दुःखध्वंस इति नोक्तानुपपत्तिः। ननु पापस्याप्यात्मविशेषगुणत्वेन स्वोत्तरोत्पन्नगुणेनैव तन्नाशसंभवात्कथं पापध्वंसस्यापि तत्वज्ञानसाध्यतेत्याशङ्कामपनेतुं नाश्यतावच्छेदककोटौ योग्यतां निवेश्य स्वोत्तरवर्तिगुणनाश्यतां वारयति—**दुरितस्य चेति**। नच पापस्य स्वो[8]त्तरव-

१ प्रत्यक्षविषय. २ स्वं दुरितम्. ३ अन्तर्भाव इति शेषः। एवमुत्तरत्र. ४ प्रकारत्वं तृतीयार्थः तथाच साध्यत्वप्रकारकेच्छेति भावः. ५ भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वं अन्यतरत्वम्. ६ आदिना इच्छा. ७ द्वित्वकारणापेक्षाबुद्धिव्यक्तेरिति पाठान्तरम्। ८ स्वं पापम्.

दिनकरी ।

द्रव्यादिष्वन्तर्भावः । निग्रहस्थानानि-प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिरोधः, प्रतिज्ञासंन्यासो, हेत्वन्तर,मर्थान्तरं, निरर्थक,मविज्ञातार्थक,मपार्थक,मप्राप्तकालं, न्यून,मधिकं, पुनरुक्त,मननुभाषण,-मज्ञान,मप्रतिभा, विक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगो, ऽपसिद्धान्तो, हेत्वाभासाश्च । अत्र चकारोऽनुक्तसमुच्चयार्थस्तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः ।

रामरुद्री ।

र्तिगुणनाश्यत्वे इष्टापत्तिसंभवेन नाश्यतावच्छेदककोटौ योग्यतानिवेशो व्यर्थ इति वाच्यम् । तथासति पापस्य प्रायश्चित्तनाश्यताबोधक[1]श्रुतिविरोधापत्तेरिति भावः । नचैवं पापस्य प्रायश्चित्तेनापि नाश्यतया कथं मुक्तिं प्रति तत्त्वज्ञानत्वेन कारणता प्रायश्चित्तजन्यपापध्वंसे व्यभि[2]चारादिति वाच्यम् । तादृशव्यभिचारवारणायैव स्वसमानाधिकरणदुरितासमानकालीनत्वरूपात्यन्तिकत्व[3]स्य कार्यतावच्छेदककोटिप्रवेशितत्वात् । नचैवं पापध्वंसे न तत्त्वज्ञानस्य प्रयोजकता किन्तु तद्विशेषणीभूतस्वसमानाधिकरणदुरितासमानकालीनत्व एवेति प्राचीनमतादविशेष इति वाच्यम् । ध्वंसव्यक्तीनां परस्परभिन्नत्वेन प्रायश्चित्तजन्यपापध्वंसव्यक्तौ तत्त्वज्ञानजन्यत्वासंभवेपि तत्त्वज्ञानाव्य[4]वहितोत्तरपापध्वंसव्यक्तौ तत्त्वज्ञानजन्यत्वे बाधकाभावादिति भावः । यद्यप्येवं सति तत्त्वज्ञानानुत्तरदुःखव्यक्तिनाशे तत्त्वज्ञानजन्यत्वासंभवेपि तत्त्वज्ञानोत्तरतद्व्यक्तौ तज्जन्यत्वसंभवेन प्राचीनमतेपि न दोषस्तथाप्येतदस्वरसेनैवाहुरित्युक्तं । तथाच दुःखध्वंसस्य मुक्तित्वेप्युक्तरीत्यानुपपत्त्यभावाद्दुःखपदस्य दुरितलक्षणाकल्पनं नव्यानां कुकल्पनमेवेत्यस्वरस आहुरित्यनेन सूचितो ग्रंथकृतेति नानुपपत्तिरिति ध्येयम् । अथ 'ज्ञानाग्निः

१ पापनिवृत्तिकामः प्रायश्चित्तं कुर्यादिति श्रुतिः. २ यत्र प्रायश्चित्तेन पापनाशः तत्र तत्त्वज्ञानरूपकारणस्य व्यभिचार इति भावः. ३ तथाच आत्यन्तिकपापनाशं प्रति तत्त्वज्ञानं कारणमिति कार्यकारणभावः. ४ स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वं स्वाव्यवहितोत्तरत्वं प्रकृते स्वपदेन तत्त्वज्ञानं, सत्यन्तानुपादाने तृतीयक्षणवृत्तेरपि स्वाव्यवहितोत्तरत्वापत्तिः । विशेष्यानुपादाने स्वपूर्ववृत्तिनोऽपि स्वाव्यवहितोत्तरत्वापत्तिः । अतः विशेषणविशेष्यदलोपादानम्. तत्त्वज्ञानाव्यवहितोत्तरेत्यनंतरमुत्पन्नेति शेषः । तेनोत्तरपदस्योत्तरवृत्तित्वार्थकत्वावश्यकतया पूर्वध्वंसव्यक्तेरपि तथात्वान्नासंगतिः । वस्तुतस्तु ज्ञानाग्निरित्यादिस्मृत्या तत्त्वज्ञानोत्तरोत्पन्नानां सर्वासामेव प्रारब्धेतरदुरितध्वंसव्यक्तीनां तत्त्वज्ञानजन्यतयाऽव्यवहितोत्तरत्वमिह प्रारब्धदुरितध्वंसभिन्नत्वे सति स्वसमानाधिकरणतत्त्वज्ञानप्रागभावासमानकालीनत्वमेव तच्च ध्वंसव्यक्तावेवान्वेति न क्षणे तथाच नोत्तरपदस्योत्तरवृत्त्यर्थकत्वादि प्रयुक्तदोषभियाशेषावश्यकतेति ध्येयम् ।

दिनकरी।

तत्र विशिष्यप्रतिज्ञातस्य पक्षादेः परित्यागरूपप्रतिज्ञाहानेरभावे, परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनरूपस्य प्रतिज्ञान्तरस्य गुणे । स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनरूपप्रतिज्ञाविरोधस्य गुणे । स्वोक्तसाध्यादेः परेण दूषणे कृते तत्साध्यापलापरूपस्य प्रतिज्ञासंन्यासस्याभावे । परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टहेतुकथनरूपस्य हेत्वन्तरस्य गुणे । प्रकृतानाकाङ्क्षिताभिधानरूपार्थान्तरस्य गुणे । अवाचकपदप्रयोगरूपनिरर्थकस्य गुणे । अवाचकवाक्यप्रयोगरूपाविज्ञातार्थस्य गुणे । परिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाक्यप्रयोगरूपाविज्ञातार्थस्य गुणे । अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षाशून्यपदप्रयोगरूपस्यापार्थकस्य गुणे । समयनिबन्धनविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानरूपस्याप्राप्तकालस्य गुणे । यत्किंचिदवयवशून्यावयवाभिधानरूपस्य न्यूनस्य गुणे । अधिकहेत्वाद्यभिधानरूप-

रामरुद्री।

सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'ति स्मृत्या दुरितस्य ज्ञाननाश्यत्वबोधनात् पापनाशरूपमुक्तौ तत्त्वज्ञानसाध्यत्वाङ्गीकारः संभवत्येव, दुःखध्वंसस्य तत्त्वज्ञानजन्यताबोधकमानाभावेन न तथात्वसंभव इति चेदिहापि 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेरेव प्रमाणत्वसंभवादात्यन्तिकदुःखनिवृत्तेरेवातिमृत्युशब्दार्थत्वात्, तत्त्वज्ञानोत्तरदुःखव्यक्तेः स्वसाक्षात्कारेण नाश्यत्वस्यैव तत्त्वज्ञानोत्तरं प्रारब्धदुरितव्यक्तीनां भोगनाश्यताया एव स्वीकरणीयत्वेन विशेषाभावात् श्रुतिबलादेव विशिष्टदुःखध्वंसे तत्त्वज्ञानसाध्यताया व्यवस्थापनसंभवात् । किंच कर्ममात्रनाशस्यैव तत्त्वज्ञानजन्यतया स्मृतिबोधिततया स्वसमानाधिकरणपुण्यासमानकालीनपुण्यध्वंसस्यापि मुक्तित्वापत्तिः। नचेष्टापत्तिः,सुखदुःखाभावतज्जनकानात्मकत्वेना[1] पुरुषार्थत्वादित्यलं पल्लवितेन । **परित्यागरूपेति** । पक्षादेः परित्यागः पक्षस्य पक्षत्वेन प्रतिपादनाभाव एवेति तस्याभावरूपतेति भावः । **प्रतिज्ञातार्थेति** । साध्येत्यर्थः । **साध्यापलापेति** । साध्यस्यापलापः साध्यत्वेनानुक्तिरेवेति भावः । **अवाचकेति** । हुंफडादीत्यर्थः । **अवाचकवाक्येति** । अत्र वाचकत्वं बोधजनकत्वमेव नतु शक्तिः, वाक्ये तदभावात्, तादृशं वाक्यं भूस्तनं हिमभेषजवदित्यादिकमप्रसिद्धार्थकपदघटितम् । **अपार्थकस्येति** । पर्वतो वह्निर-

---

१ तज्जनकाभावानात्मकेति पाठान्तरम्.

**शंकितम् । नेनु कथमेत एव पदार्थाः शक्तिसादृश्यादीना-**

दिनकरी ।

स्याधिकस्य गुणे । पुनरभिधानरूपस्य पुनरुक्तस्य गुणे । परिषदा त्रिभिरभिहितस्याप्यप्रत्युच्चारणरूपस्याननुभाषणस्याभावे । परिषदा विज्ञातार्थस्य वादिना त्रिरभिहितस्याप्यविज्ञानरूपस्याज्ञानस्याभावे । उत्तरार्हे परोक्तं बुद्ध्वाप्युत्तरस्याप्रतिपत्तिरूपाया अप्रतिभाया अभावे । असम्भवत्कालान्तरकार्यव्यासङ्गमुद्भाव्य कथाविच्छेदरूपस्य विक्षेपस्याभावे । स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानरूपमतानुज्ञाया गुणे । निग्रहस्थानं प्राप्तवतो निग्रहस्थानानुद्भावनरूपस्य पर्यनुयोज्योपेक्षणस्याभावे । निग्रहस्थानानवसरे तन्निग्रहस्थानाभिधानरूपस्य निरनुयोज्यानुयोगस्य गुणे । कथायां स्वीकृतसिद्धान्तप्रच्यवनरूपस्यापसिद्धान्तस्याभावे । हेत्वाभासानां पूर्वोक्तलक्षणानां द्रव्यादिष्वन्तर्भाव इति । भाष्यस्यार्षत्वमाशङ्क्य मणिकृतां संमतिमाह—**अत एवेति ।** मण्यादिसमवधाने सति वह्निना दाहोत्पत्तिवारणाय मण्यादेः कारणविघटकत्वरूपाप्रतिबन्धकता वाच्या सा च वह्निनिष्ठदाहानुकूलशक्तिरूपकारणविघटकतयैव निर्वहति,मण्यादिप्रतिबन्धकत्वान्यथानुपपत्त्या सिद्धायाः शक्तेः षड्भावेष्वनन्तर्भूतत्वादतिरिक्तत्व-

रामरुद्री ।

घिकरणमित्यादेरपार्थकस्येत्यर्थः । **असंभवत्कालान्तरेति ।** सुतदारादिपरिरक्षणरूपेत्यर्थः । **कथाविच्छेदः ।** शब्दोच्चारणाभावः । **सिद्धान्तस्य ।** तार्किकादिमतसिद्धार्थस्य । **स्वीकृतस्य** स्वेन साधनीयतयाङ्गीकृतस्य । **प्रच्यवः ।** अनुपपादनम् । एवं च तस्याभावरूपतेति भावः । **आर्षत्वमाशंक्येति ।** तथाच भाष्यकारस्य महर्षित्वेन 'तेजस्विनां न दोषाय वह्नेः सर्वभुजो यथे'ति वचनादनुपपन्नार्थप्रतिपादनं न दोषायेत्यभिप्रायेण मणिकारस्येदानींतनस्यापि तादृशार्थप्रतिपादकता मुक्तावलीकारेणाभिहितेति भावः । **षड्भावेष्विति ।** शक्तेः द्रव्ये नांतर्भावः, स्पर्शशून्यत्वात् पृथिव्यादिचतुष्टये, उत्पादविनाशशालित्वादाकाशादिपंचकेप्यनंतर्भावात्

---

१ ननु प्राभाकरमते शक्तेरतिरिक्तपदार्थत्वादालङ्कारिकमते सादृश्यस्यातिरिक्तपदार्थत्वाच्च पदार्थानां सप्तत्वकथनमसङ्गतमिति तटस्थः शङ्कते—**नन्विति.** २ समवधानं साहित्यम्. ३ सा प्रतिबन्धकता. ४ शक्तिः पृथिव्यादिचतुष्टयानान्तर्भूता स्पर्शशून्यत्वात् इत्यनुमानप्रयोगः. ५ शक्तिः आकाशादिपञ्चकानन्तर्भूत उत्पादविनाशशालित्वादिति अनुमानप्रयोगः.

मप्यतिरिक्तपदार्थत्वात् । तथाहि, मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च

दिनकरी ।

मिति पदार्थाः सप्त कीर्तिता इति मूलमयुक्तमित्यभिप्रायेण प्राभाकरः शङ्कते—नन्विति । अतिरिक्तेति । सप्तपदार्थातिरिक्तेत्यर्थः । अतिरिक्तपदार्थतामेव व्यवस्थापयति तथाहीत्यादिना । मण्यादीत्यादिना मन्त्रौषध्यादिपरिग्रहः । समवहितेन, समीपवर्तिना । ननु वह्निरूपकारणाभावादेव न दाह इति न मण्यादेः प्रतिबन्धकत्वमतः समवहितेन वह्निनेति । दाहो रूपान्तरोत्पत्तिः पूर्वरूपपरावृत्तिर्वा । मण्याद्यतिरिक्तस्य प्रतिबन्धकत्वं खण्डयति—तच्छून्येनेति । मणिसमवधानशून्येनेत्यर्थः । ननु वह्नौ यदि दाहानुकूला शक्तिस्तदा मण्यादिसत्वे कुतो न दाह इति चेत्तत्राह—

रामरुद्री ।

नापि गुणकर्मणोः गुणवृत्तित्वात्, कपालादिरूपादिषु घटरूपाद्युत्पादकशक्तिसत्वात् । नापि सामान्यविशेषसमवायेषु उत्पादविनाशशालित्वादित्यर्थः । **अतिरिक्तत्वमिति** । सप्तपदार्थातिरिक्तत्वमित्यर्थः । नच तस्या अभावान्तर्भावसंभवात्कथं सप्तपदार्थातिरिक्तत्वमिति वाच्यम् । नञुल्लिखितप्रत्ययाविषयत्वेन स प्रतियोगिकत्वाननुभवेन च तस्या अभावेप्यनन्तर्भावादिति भावः । **वस्तुतस्तु** षड्भावेष्विति पाठः [1]प्रामादिकस्तावन्मात्रेण सप्तपदार्थातिरिक्तत्वासिद्धेः हेत्वन्तरपूरणे च गौरवापत्त्या क्लृप्तपदार्थेष्वित्येव वक्तुमुचितत्वात् । यथोत्पत्तिविनाशशालित्वेन नित्यद्रव्यादिषु शक्तेर्नान्तर्भावस्तथैव नित्यात्यन्तान्योन्याभावयोरपि, विनाशित्वेन ध्वंसे, उत्पन्नत्वेन प्रागभावेप्यनंतर्भावसंभवाच्चेति ध्येयम् । **रूपपरावृत्तिर्वेति** । रूपनाशो वेत्यर्थः । लाघवमेवोत्तरकल्पानुसरणे बीजम् । ननु मूले तच्छून्येनतु जन्यत इत्युक्तिर्व्यर्था तस्याः प्रतिबन्धकत्वासाधकत्वात् । अतस्तस्या मण्यतिरिक्तप्रतिबन्धकताखण्डकत्वेन सार्थकतां व्यवस्थापयति । **मण्याद्यतिरिक्तेति** । गगनादीनां प्रतिबन्धकत्वमित्यर्थः । तथाच गगनादीनां प्रतिबन्धकत्वे मणिशून्यदशायामपि वह्निना दाहो न स्यात्प्रतिबन्धकसत्त्वादतो

---

१ वस्तुतस्तु नन्वित्यादिशंकाकर्तुः प्राभाकरमतेऽभावस्याधिकरणात्मकतया शक्तेः षड्भावानन्तर्भूतत्वसाधनेनैवाभावानन्तर्भूतत्वस्यापि तन्मते सिद्धतया न पृथगभावानन्तर्भूतत्वं साधितमिति न षड्भावेष्वनंतर्भूतत्वादित्यस्य प्रामादिकत्वमिति ।

**जन्यते इति कल्प्यते । एवं सादृश्यमप्यतिरिक्तः पदार्थः,**

**दिनकरी ।**

**तत्रेति ।** पूर्वोक्तयुक्त्या शक्तिसिद्धावित्यर्थः । **दाहानुकूलेति ।** अत्र चानुकूलत्वं कारणकारणतावच्छेद[1]कसाधारणं तेन शक्तेः कारणतावच्छेदकत्वेऽपि न क्षतिः । नाश्यत इत्यस्य कल्प्यते इत्यनेनान्वयः । तथाच वह्निनिष्ठशक्तित्वावच्छिन्नं प्रति मणित्वेन नाशकत्वस्वीकारेण मण्यादिसत्वदशायां शक्तेरभावादेव न दाह इति भावः । ननु मण्यादेर्यदि शक्तिनाशकत्वं तदा सत्युत्तेजकविशिष्टे मण्यादावपसारिते वा दाहानापत्तिरित्यत आह—**उत्तेजकेनेति ।** मण्याद्यपसारणेन चेत्यत्र चकारो वाकारार्थे । नच दाहं प्रति मण्यभावत्त्वेन हेतुत्वकल्पनान्न मणिसमवधानकाले दाहापत्तिरिति वाच्यं, मण्यभावत्वेन रूपेण स्वतन्त्रहेतुताकल्पने गौरवात् । विलक्षणशक्तिमत्वेन वह्नेः कारणत्वकल्पनस्यैवोचितत्वादित्यभिमानात् । नन्वेवं शक्तिसिद्धावपि तस्या अतिरिक्तत्वासिद्धिरिति चेन्न । उक्त[2]पदार्थेष्वनन्तर्भूतत्वात् । तथाहि न तावत् द्रव्यात्मिका शक्तिः, गुणादिवृत्तित्वात् । अतएव न गुणात्मिका कर्मात्मिका वा । न च सामान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वादिति ॥

**रामरुद्री ।**

मण्यादेरेव प्रतिबन्धकता वाच्येति मूलाभिप्राय इति भावः । **पूर्वोक्तयुक्त्येति ।** मण्यादिसमवधाने सतीत्यादिना स्वेन पूर्वमुक्तयुक्त्येत्यर्थः । **कारणतावच्छेदकत्वेपीति ।** वह्नित्वेन वह्नेः शक्तित्वेन वह्निनिष्ठशक्तित्वेन वा शक्तेश्च दाहं प्रति कारणत्वे गौरवाच्छक्तिविशिष्टवह्नित्वेनैव कारणत्वौचित्याच्छक्तेः कारणत्वाभावादिति भावः । **वस्तुतो** मीमांसकैर्घटादिकं प्रति तत्तत्कारणेषु घटाद्यनुकूलां शक्तिं कल्पयित्वा तादृशविलक्षणशक्तिमत्त्वेनैव कारणत्वस्याङ्गीकाराद्दण्डचक्रादिभेदेनापि न कारणताबाहुल्यमित्यपि लाघवमेतन्मत इति मन्तव्यम् । **वाकारार्थ इति ।** उत्तेजकमण्यपसारणयोरेकसत्वेपि दाहोत्पत्त्या समुचितयोस्तयोर्दाहकारणत्वासंभवादिति भावः । **न मणिसमवधानकाल इति ।** मण्यभावस्य हेतुतयैव मणिसमवधानकाले दाहवारणसंभवान्नानन्तशक्त्यादिपदार्थकल्पनं युक्तमिति भावः । **अभिमानादिति ।** वस्तुतस्त्वनन्तशक्तितत्प्रागभावध्वंसानां कल्पनामपेक्ष्य मण्य-

---

१ जनकतावच्छेदकनिष्ठान्यथासिद्धि भिन्नान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणवृत्तित्वम्. २ द्रव्यादिसप्तपदार्थेषु.

**तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि सत्वात् यथा गोत्वं नित्यं तथाश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः ।**

दिनकरी ।

एवमतिरिक्तां शक्तिं प्रसाध्य सादृश्यस्याप्यतिरिक्तपदार्थतां व्यवस्थापयति—**एवमित्यादिना । अतिरिक्त इति ।** क्लृप्तसप्तपदार्थातिरिक्त इत्यर्थः । षड्भावानन्तर्भूतत्वे सत्यभावानंतर्भूतत्वादिति हेतुः पूरणीयः[1] । तत्र सत्यन्तासिद्धिं निरस्यति—**तद्धीति ।** तत्सादृश्यं, हि हेतौ । **सामान्येपीति ।** सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः । तेन[2] सामान्यत्वे न व्यभिचारः । व्यतिरेकित्वे[3] सतीति विशेषणान्न प्रमेयत्वादौ व्यभिचारः । भावत्वे च द्रव्यादिषट्कान्यतमत्वरूपे हेतुमति साध्यस्य सत्वान्न व्यभिचार इति । **यथेति ।** यदि सादृश्यं

रामरुद्री ।

भावत्वेन कारणत्वान्तरकल्पनमेवोचितम् कल्प्यस्यैकत्वेन लाघवादिति सूचयितुमुक्तममिमानादिति । क्लृप्तपदार्थानन्तर्भूतत्वे मूलोक्तस्य षड्भावानन्तर्भूतत्वस्य न हेतुता संभवति अभावे व्यभिचारात्, नाप्यभाव इत्यनेनोक्तस्याभावानन्तर्भूतत्वस्य, भावपदार्थे व्यभिचारादतो हेत्वन्तरं पूरयति—**षड्भावेति । तत्रेति ।** उक्तहेतावित्यर्थः । घटकत्वं सप्तम्यर्थः । तस्य च सत्यन्तेऽन्वयः । हि **हेताविति ।** हिशब्दो हेतुवाचक इत्यर्थः । सप्तम्या वाचकत्वार्थकत्वात् । तथाच हेतोरभेदेन षड्भावानन्तर्भावविशेषणत्वमिति भावः । नचैवं हेतुरित्युक्ते कुत्रेत्याकाङ्क्षोदयाद्धेतुत्वनिरूपकान्वय्यनुक्त्या न्यूनत्वमिति वाच्यम् । हेत्वन्वयिन उक्तहेतावित्यस्याध्याहारेणोक्तहेतुहेत्वभिन्नषड्भावानन्तर्भूतत्वविशिष्टभावांतर्भूतत्वाभावाश्रयः सादृश्यमिति बोधे तात्पर्यात् । अत्रच भावान्तर्भूतत्वाभावान्तर्भूतत्वयोरभावद्वयस्य मिलितस्यैव हेतुत्वं प्रत्येकस्य भावाभावयोर्व्यभिचारित्वादिति मन्तव्यम् । इदं चापाततो मूलोक्तस्य मिलिताभावद्वयस्यैवातिरिक्तपदार्थत्वे हेतुत्वसंभवेन हेत्वन्तरं पूरयित्वा तत्र विशेषणविशेष्यभागाप्रसिद्धिनिरासपरत्वेन तद्धीत्यादिग्रन्थव्याख्यानस्यानुचितत्वादिति ध्येयम् । **सामान्येतरवृत्तित्वे सतीति ।** सामान्येऽपीत्यपिना सामान्येतरस्य समुच्चितत्वादयमर्थो लभ्यत इति भावः । **तेनेति ।** सामान्येतरवृत्तित्वोपादानेनेत्यर्थः । अथ सामान्यत्वमनेकसमवेतत्वे सति नित्यत्वं, तच्च ध्वंसप्रागभावाप्रतियोगित्वरूपतयाऽभावस्वरूपमेवेति कथं व्यभिचारः । नच विनिगमनाविरहेण नित्यत्वे

---

१ सादृश्यं सप्तपदार्थानंतर्भूतं षड्भावानंतर्भूतत्वे सत्यभावानन्तर्भूतत्वात् इति अनुमानम् । २ सामान्येतरवृत्तित्वे सतीति विशेषणेन । ३ अत्यन्ताभावप्रतियोगित्वं व्यतिरेकित्वं तच्च प्रमेयत्वे नास्ति तस्यात्यंताभावाप्रतियोगित्वादिति भावः । ४ तथाचोक्तहेतुघटकसत्यंतासिद्धिं निरस्यतीत्यर्थः.

**नाप्यभावे,सत्त्वेन प्रतीयमानत्वादिति चेन्न। मण्याद्यभावविशि-**

दिनकरी ।

द्रव्यादावन्तर्भूतं तदा द्रव्यादेः सामान्यावृत्तित्वेन यथा गोत्वं नित्यं तथा अश्वत्वमित्यबाधितप्रतीतिर्न स्यादित्यर्थः । अभावेऽन्तर्भावमाशङ्क्य निराचष्टे—नापीति । यद्यप्यतिरिक्ताभावमनङ्गीकुर्वतः प्राभाकरस्य मतेऽभावेऽन्तर्भावचिन्ता न संभवति तथापि परमतम-

रामरुद्री ।

सत्यनेकसमवेतत्वस्यापि सामान्यत्वरूपतासंभवेन तस्य चानेकानुयोगिकसमवायप्रतियोगित्वस्य स्वरूपसंबन्धविशेषरूपस्य सामान्यात्मकतेया भवति व्यभिचार इति वाच्यम् । एवमप्यभेदे आधाराधेयभावानुपगमेन सामान्ये तद्वृत्तित्वासत्त्वेन व्यभिचाराप्रसक्तेः । नच सामान्यत्वं सामान्यत्वप्रकारकज्ञानरूपमेव विवक्षितमिति वाच्यम् । तथासति सामान्यविषयकज्ञानस्य विषयतया सामान्यसंबन्धित्वात् सामान्येतरात्मवृत्तित्वाच्च सत्यन्तोपादानेपि व्यभिचारतादवस्थ्यात् । व्यभिचारवारणरूपप्रयोजनाभावेन सत्यन्तसार्थक्यमात्राय वृत्तित्वस्थाने संबन्धित्वविवक्षाया अनुचितत्वाच्च । तस्मात्सामान्यनिरूपितायाः संबन्धान्तरावच्छिन्नवृत्तिताया अप्रसिद्ध्या स्वरूपसंबन्धावच्छिन्नसामान्यवृत्तित्वमेव हेतुर्वाच्यः । सामान्यत्वे च न तादृशं सामान्यवृत्तित्वमिति व्यभिचारो दुर्घट एव । युक्तं चैतत् । सादृश्यस्यातिरिक्तत्ववादिनापि स्वरूपसंबन्धेनैव तस्य प्रकारत्वोपगमेन तस्य भूयोधर्मवत्वरूपतावादिनापि स्वरूपेणैव तस्य प्रकारताङ्गीकरणीया अनुभवे विवादासंभवात् एकाकारप्रतीतेर्नानासंबन्धेन तत्प्रकारकत्वानौचित्याच्च । अतएव ग्रन्थकृतापि तद्भिन्नत्वे सति तद्गतभूयोधर्म इत्यनुक्त्वा तद्गतभूयोधर्मवत्त्वपर्यन्तमनुसृतं, तथाच सादृश्ये स्वरूपासिद्धिवारणायोभयमतसिद्धं सामान्यनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वमेव हेतुरित्यवश्यमङ्गीकरणीयमिति न व्यभिचार इति चेन्न । सामान्यं सामान्यत्ववदितिप्रतीत्या सामान्ये सामान्यत्वाधारत्वावगाहनेन सामान्यत्वस्य सामान्यातिरिक्तस्य दुर्वचत्वेन च स्वस्यापि स्वरूपसंबन्धेन स्ववृत्तित्वमवश्यमङ्गीकरणीयं, अभावाधिकरणकाभावस्थले सर्वैरपि तथा स्वीकारात् । अनयैव रीत्या प्रमेयत्वादावपि वक्ष्यमाणव्यभिचारो बोध्यः । सर्वं प्रमेयत्ववदिति प्रतीत्या प्रमेयत्वस्य प्रमास्वरूपस्य स्वरूपसंबन्धेन वृत्तेरावश्यकत्वात्, विषयताया विषयस्वरूपत्वे च सर्वत्र प्रमेयत्वमेकमिति प्रतीतिविरोधात् । ज्ञानस्वरूपे च प्रमेयत्वे स्वरूपसंबन्धेन सामान्यतदितरवृत्तित्वसत्त्वाद्व्यभिचारस्यावश्यकत्वादिति भावः । **नन्वे**[२]न्यतरसंबन्धेन सत्तावत्वरूपभावत्वे हेतुसत्त्वाद्व्यभिचार इत्याशङ्कां निराकुरुते—**भावत्वे चेति** । नचैवमपि घटघटत्वगतद्वित्वे व्यभि-

---

१ प्रकारत्वं तृतीयार्थः । तथाच सत्त्वप्रकारकप्रतीतिविषयत्वादित्यर्थः । अत्र तृतीयान्तानुक्तौ अभावे व्यभिचारः । तत्राप्यभाव इति प्रतीतिविषयत्वसत्त्वात्. २ समवायस्वसमवायिसमवायान्यतरसंबन्धेनेत्यर्थः.

**ष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं**

दिनकरी ।

भ्युपेत्येदं निराकृतमिति भावः । सत्वेन भावत्वेन । प्रतीयमानत्वात् प्रमीयमाणत्वात् । मणिसमवधानकालीनवह्निना दाहापत्तिवारणाय प्राभाकरेण साधितां शक्तिं दूषयति—**मण्याद्यभावेति** । अतिरिक्तशक्तिकल्पनां पूर्वोक्तनाश्यनाशकभावकल्पनां चापेक्ष्य लाघवाद्दाहत्वावच्छिन्नं प्रति मण्यभावविशिष्टवह्नित्वादिनैव हेतुताकल्पनमुचितमिति भावः । **दाहादिकमिति** । आदिपदेन वह्नेः संग्रहः । मणिसत्वे वह्नेरप्यनुत्पत्तेः । **तथाच** मणिरूपप्रतिबन्धकसद्भावान्न दाहवह्नी इति भावः । **ननु** यदा कदाचिन्मण्यभावविशिष्टाद्वह्नेर्दा-

रामरुद्री ।

चारो दुर्वारस्तस्य संख्यारूपत्वासंभवेपि द्वित्ववत्ताबुद्ध्युपपत्तयेऽपेक्षाबुद्धिरूपस्य स्वरूपसंबन्धेन वृत्तेरावश्यकत्वादिति वाच्यम् । व्यासज्यवृत्त्यन्यत्वस्यापि हेतौ विशेषणत्वोपगमात् । व्यासज्यवृत्तित्वं च एकमात्रवृत्तिधर्मावच्छिन्नापर्याप्तिमत्वमिति न किंचिदनुपपन्नम् । वस्तुतस्तु स्वरूपसंबन्धावच्छिन्नसामान्यवृत्तित्वमेव हेतुरिति मूलकृतां तात्पर्यं, अपिकारस्तु सादृश्यस्य सामान्यमात्रवृत्तित्वे मुखादौ चन्द्रसादृश्यप्रतीतिर्न स्यादित्याशङ्कानिरासाय स्वरूपसतः सामान्येतरवृत्तित्वस्यानुवादक एव नतु हेतुतावच्छेदकत्वेपि मूलकृतां तात्पर्यम् । नचैवं सामान्यस्वरूपे सामान्यत्वे व्यभिचार इति वाच्यम् । आधाराधेयभावप्रतीत्यनुरोधेनानेकसमवेतत्वे सति नित्यत्वस्वरूपताया एव सामान्यत्वे स्वीकरणीयत्वात् । एवं प्रमेयत्वमपि न प्रमैव विषयार्थकप्रत्ययादिविरोधादपि तु प्रमाविषयत्वं, तथाच प्रमेयत्वस्य विषयतारूपस्य प्रतिविषयं भिन्नत्वेन कस्यामपि विषयतायां सामान्यतदितरोभयवृत्तित्वासंभवेन प्रमेयत्वेपि व्यभिचारासंभवात् हेतौ व्यतिरेकित्वविशेषणमप्यनर्थकमेव । परंतु विषयस्वरूपाया विषयतायाः स्वरूपसंबन्धेन सामान्यवृत्तित्वसत्त्वात्तत्र व्यभिचारवारणाय सामान्यवृत्तित्वे विषयतात्वाद्यनवच्छिन्नत्वं विशेषणं देयं, एवंच द्वित्वादिकमपि अपेक्षाबुद्धिविषयत्वमेव नत्वपेक्षाबुद्धिरूपं ज्ञाने विषयवृत्तित्वस्य क्वाप्यक्लृप्तत्वादिति तत्रापि न व्यभिचार इति । सामान्यभिन्नत्वं वा हेतोर्विशेषणम् । सादृश्ये सामान्यभेदस्याभाववृत्तित्वेन साधनसंभवादिति । एतल्लाभायैवापिपदमपि सार्थकमिति युक्तमुत्पश्यामः । **भावत्वेनेति** । **ननु** भावत्वेन[2] प्रतीयमानत्वं भ्रान्तपुरुषस्याभावे[3]ऽप्यक्षतं तत्राभावानन्तर्भूतत्वाभावादयं हेतुर्व्यभिचारीत्याशङ्कानिरासाय तदर्थमाह—**प्रमीयमाणत्वादिति** । **यदाकदाचिदिति** । मणिसत्त्वदशायामपि पूर्वकालावच्छेदेन मण्यभावसामानाधिकरण्यरूपवैशिष्ट्यवतो वह्नेर्दाहापत्तिरिति भावः । **ननु** कारण-

---

१ प्रमाविशेष्यत्वात्. २ भावत्वप्रकारकप्रतीतिविशेष्यत्वम्. ३ अभावोभाव इति भ्रान्तिमतः पुरुषस्येत्यर्थः.

कल्प्यते, अनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्प-

दिनकरी।

ह्यापत्तिः कारणतावच्छेदकावलीढकारणसत्त्वस्यैव कार्योत्पत्तिनियामकत्वात्, मण्यभावविशिष्टवह्नित्वं वह्निविशिष्टमण्यभावत्वं वा कारणतावच्छेदकमित्यत्र[1] विशेषणविशेष्यभावे विनिगमनाविरहेण गुरुभूतकार्यकारणभावद्वयापत्तिश्चेत्यत आह—**मण्यभावादेरिति।** तथाच प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वं बाधज्ञानस्यानुमितिप्रतिबन्धकत्वाभावापत्तेः। किंतु कारणीभूताभावप्रतियोगित्वम्, तच्च[1] मण्यभावस्य हेतुत्व एवोपपद्यते न त्वतिरिक्तशक्तिसत्त्व इति भावः। **ननु** प्रतिबन्धकत्वस्यैतद्देशत्वे[2] कारणीभूतवह्निरूपाभा-

रामरुद्री।

तावच्छेदकविशिष्टकारणसत्त्वमेव कार्योत्पत्तिप्रयोजकं, तदधिकरणे मण्यभावासत्त्वदशायां सामानाधिकरण्यसंबन्धेन[3] मण्यभावविशिष्टवह्न्यधिकरणत्वाभावान्न दाहापत्तिरित्यत आह—**कारणतावच्छेदकावलीढेति।** कारणतावच्छेदकोपलक्षितेत्यर्थः। अन्यथा विशेषणज्ञानस्य विषयितासंबन्धेन विशेषणविशिष्टज्ञानरूपस्य विशिष्टबुद्धिहेतुत्वे गतानागतविशेषणज्ञानजन्यविशिष्टज्ञाने व्यभिचारापत्तेरिति भावः। **ननु** विषयितासंबन्धेन विशेषणस्य न कारणतावच्छेदकत्वमपि तु विशेषणनिरूपितविषयिताया एव, विषयिता च ज्ञानसमानकालीनैवेति कारणतावच्छेदकविशिष्टस्य कार्योत्पत्तिप्रयोजकत्वेपि न क्षतिरित्यस्वरसादाह—**मण्यभावेति। गुरुभूतेति।** वह्नित्वेन मण्यभावत्वेन कारणत्वाङ्गीकारेपि कारणताद्वयमेव किंतु लघुधर्मावच्छिन्नं। मण्यभावविशिष्टवह्नित्वादिना कारणत्वे तु गुरुधर्मावच्छिन्नकारणताद्वयमापद्येतेति भावः। **नन्वेवं** मणेः प्रतिबन्धकत्वानुपपत्तिः। कारणविघटकस्यैव प्रतिबन्धकत्वान्मणेर्मण्यभावानाशादित्यत आह—**तथाचेति। बाधज्ञानस्येति।** यत्र परामर्शानन्तरं लौकिकप्रत्यक्षरूपो बाधनिश्चयस्तत्र बाधनिश्चयोत्पत्तिद्वितीयक्षणे परामर्शनिष्ठशक्तिनाशो वक्तव्यः। तथाच बाधोत्पत्तितृतीयक्षणे बाधेनानुमितिप्रतिबन्धो वाच्यः। स च न संभवति तत्पूर्वं परामर्शाभावादेवानुमित्यनुत्पादसंभवात् बाधद्वितीयक्षणेऽनुमित्यापत्तेश्च तत्पूर्वं शक्तिविशिष्टपरामर्शसत्त्वादिति भावः। **नत्वतिरिक्तेति।** अतिरिक्तशक्त्यङ्गीकारे मण्यभावस्य कारणत्वे युक्तिविरहात् कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्य मणावसंभवादिति भावः। **वह्न्यभाव इति।** कारणाभावे प्रतिबन्धकताव्यवहाराभावात्कारणसत्वे

१ तादृशप्रतिबन्धकत्वम्. २ कारणीभूताभावप्रतियोगित्वरूपत्वे. ३ स्वरूपसंयोगोभयघटितसामानाधिकरण्यसंबधेनेत्यर्थः. ४ विनिगमनाविरहात् मण्यभावविशिष्टवह्नित्वेन वह्निविशिष्टमण्यभावत्वेन वा कारणत्वे गुरुधर्मावच्छिन्नकारणताद्वयम्.

नानौचित्यात्। नचोत्तेजके[1] सति प्रतिबन्धकसद्भावेपि कथं

दिनकरी।

वप्रतियोगिनि वह्न्यभावेतिव्याप्तिः स्व[2]प्रागभावप्रतियोगिनि घटादौ चेति चेन्न। तादात्म्यातिरिक्तसंबन्धावच्छिन्ना या कारणता तदाश्रयीभूतो यो भावभिन्नोऽत्यन्ताभावस्तत्प्रतियोगित्वस्य विवक्षितत्वात्। कारणताविशेषोपादानाच्च स्वात्यन्ताभावप्रत्यक्षे स्वस्य प्रतिबन्धकत्वापत्तिः परास्ता। विषयस्य तादात्म्यसंबन्धेनैव प्रत्यक्षे हेतुत्वात्[3]। ननु वह्निमण्यभावयोर्द्वयोर्हेतुत्वापेक्षयातिरिक्तशक्तेरेकस्या एव हेतुता युक्ता लाघवादित्यत आह—**अनेनैवेति**। दाहादिकं प्रति मण्यभावादेर्हेतुत्वकल्पनेनैवेत्यर्थः। **सामंजस्ये** मणिसमवधानदशायां दाहवारणे। प्रागभावे मानाभावादाह—**ध्वंसेति**। इदमुपलक्षणं[4]

रामरुद्री।

कार्यानुत्पत्तिप्रयोजकस्यैव प्रतिबन्धकत्वेन व्यवह्रियमाणत्वान्नेष्टापत्तिसंभव इति भावः। **घटादौ चेति**। तथाच स्वस्य स्वोत्पत्तौ प्रतिबन्धकत्वापत्तिरिति भावः। प्रतिबन्धकाभावस्य कार्यकालवृत्तित्वेन कारणतया नात्रापीष्टापत्तिः। **भावभिन्नोऽत्यन्ताभाव इति**। वह्न्यभावाभावं वह्निस्वरूपमादाय वह्न्यभावे प्रतिबन्धकत्वापत्तिवारणाय भावभिन्न इति, प्रागभावमादाय स्वस्मिन्स्वप्रतिबन्धकत्वापत्तिवारणाय अत्यन्ताभाव इति। यद्यप्यत्यन्ताभावत्वं नित्यत्वे[5] सति संसर्गाभावत्वं तच्च न वह्न्यादौ, भावभिन्नत्वरूपाभावत्वस्यैव तत्रासत्वात् तथापि प्रकृते अत्यन्ताभावत्वं नाभावत्वघटितं किंतु अन्योन्याभाव[6]भिन्नत्वे सति ध्वंसप्रागभावभिन्नत्वे सति सप्रतियोगिकत्वमतो न भावभिन्न इत्यस्य वैयर्थ्यम्, अतएव यत्र अनुयोगिवाचकपदोत्तरं सप्तमी तत्र नञा अत्यन्ताभावो बोध्यत इति नियमोप्युपपद्यते, अन्यथा भूतले घटाभावो नास्तीत्यादौ न स्यादेव नञा अत्यन्ताभावस्य बोध्यत्वमिति ध्येयम्। **परास्तेति**। नचोक्तापत्तिवारणाय दैशिकविशेषणतासंबन्धावच्छिन्नत्वमेव कारणताविशेषणमस्तु तथाच भावानां दैशिकविशेषणतासंबन्धेन अकारणत्वाद्भावभिन्न

---

१ उत्तेजकत्वं प्रतिबन्धकसमानकालीनकार्यजनकत्वम्. २ स्वं घटः. ३ तथाच स्वनिष्ठविषयतासंबन्धेन प्रत्यक्षंप्रति तादात्म्येन स्वं कारणमिति कार्यकारणभावः. ४ मुक्तावल्यामित्यादिः. ५ नित्यत्वानुपादाने प्रागभावेध्वंसेचातिव्याप्तिः। नित्यत्वं च ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वं तथैव ग्रन्थकृताङ्गीकारात् नित्यत्वमात्रोक्तौ गगनादावतिव्याप्तिः. ६ अत्रान्योन्याभावेऽतिव्याप्तिवारणार्थं अन्योन्याभावभिन्नत्वं ध्वंसप्रागभाववारणार्थं ध्वंसप्रागभावभिन्नत्वम्.

**दाह इति वाच्यं, उत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वात् ।**

दिनकरी ।

प्रतियोगिध्वंसयोः शक्तिनाशमण्योः शक्तिमण्यपसारणयोश्च कार्यकारणभावकल्पनापि स्यादित्यपि बोध्यम् । **उत्तेजकाभावेति ।** तथाच केवलं मणिर्न प्रतिबन्धकः किंतु उत्तेजकाभावविशिष्टस्तदभावश्च उत्तेजकसमवधानकालेऽपि तिष्ठतीति न व्यभिचार इति भावः । **अथ** मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्यैव हेतुतास्त्विति **चेन्न** । तस्या[2]ननुगतत्वात्तदभावकूटविशिष्टमण्यभावस्य चानुगतत्वात् । **अत्रेदं बोध्यम्**, अभावीयविशेषणतासंबन्धेन दाहत्वावच्छिन्नं प्रति उद्देश्यतादैशिकविशेषणतान्यतरसंबन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानधिकरण्यरूपं यद्वैशिष्ट्यं

रामरुद्री ।

इत्यपि नोपादेयमिति वाच्यम् । चक्षुःसंयुक्तविशेषणतादिना भावानामपि दैशिकविशेषणतया कारणत्वेन तदावश्यकत्वात् । इदमिहेतिप्रतीतिनियामकविशेषणतारूपस्य तस्याऽलघुत्वाच्चेति ध्येयम् । **तस्याननुगतत्वादिति ।** मणिमन्त्रमहौषध्यादिषु उत्तेजकत्वस्यैकस्य दुर्वचत्वात् पृथिवीत्वादिना सांकर्येण तस्य जातित्वासंभवादिति भावः । **नन्वे**वमुत्तेजकाभावविशिष्टमण्यभावत्वेनापि हेतुता न संभवति उत्तेजकस्यानुगतस्याभावादित्यत आह-**तदभावकूटविशिष्टमण्यभावस्येति ।** उत्तेजकाभावकूटविशिष्टमण्यभावस्य हेतुत्वे मन्त्ररूपोत्तेजकदशायामपि मन्त्रस्य गगननिष्ठत्वेन वह्न्यधिकरणे देशे तदभावसत्वात्सामानाधिकरण्यसम्बन्धेन तदुत्तेजकाभावविशिष्टमणिसत्वाद्दाहानुत्पादप्रसङ्गः । किंच संयोगेन द्रव्यस्याव्या[3]प्यवृत्तितामते मणिसत्वेऽपि किंचिदवच्छेदेन संयोगेन मण्यभावसत्वात् दाहापत्तिश्चेत्याशङ्कां निराकुरुते—**अत्रेदं बोध्यमिति । अभावीयविशेषणतेति ।** दाहस्य ध्वंसरूपतया विशेषणतयैव तदुत्पत्तेरिति भावः । **उद्देश्यता दैशिकविशेषणतान्यतरेति ।** मन्त्रस्य उद्देश्यतासंबन्धेनैव वह्न्यधिकरणदेशे सत्वात् उद्देश्यतानिवेशः । मण्यादिरूपोत्तेजकस्य सत्वेऽपि किंचिदवच्छेन संयोगेन तदभावसत्वाद्दाहानुपपत्ति-

---

१ उत्तेजकाभावविशिष्टो यो मणिः तदभावस्येत्यर्थः । वैशिष्ट्यं च सामानाधिकरण्येन. २ तस्य उत्तेजकस्य. ३ स्वप्रतियोगित्वस्वसामानाधिकरण्योभयसंबन्धेन अभावविशिष्टत्वमव्याप्यवृत्तित्वं, प्रथमसंबन्धानुपादाने गुणत्वाभावसामानाधिकरण्यमादाय द्रव्यत्वस्याव्याप्यवृत्तित्वापत्तिः । द्वितीयसंबन्धानुपादाने घटाद्यभावमादाय घटादावव्याप्यवृत्तित्वापत्तिः.

दिनकरी।

तदवच्छिन्नस्य मण्यादेर्दैशिकविशेषणतोद्देश्यतान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावास्याभावीयविशेषणतासंबन्धेन हेतुत्वमिति। एतेन संयोगसंबन्धावच्छिन्नप्रतियोगिताकमण्यभावस्य तत्संयुक्तेपि सत्वात् दाहापत्तिरिति परास्तम्। नन्वनुमानमेव[1] शक्तौ प्रमाणम्। तथाहि, वह्निर्दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी दाहजनकत्वाददृष्टवदात्मवदिति। वह्निद्व्यणुकत्वमादाय भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपमादाय वा सिद्धसाधनवारणाय साध्ये दाहानुकूलेति। वह्निद्व्यणुकेन्धनसंयोगमादायादृष्टवदात्मसंयोगमादाय वा तद्वारणायाद्विष्ठेति। वह्निनिष्ठोष्णस्पर्शमादाय तद्वारणायातीन्द्रियेतीति चेन्न। विपक्षे बाधकतर्कविरहेणास्यानुमानस्याप्रयोजकत्वात्। केचित्तु वह्निं प्रति तृणफूत्कारसंयोगादीनां तृणफूत्कारसंयोगत्वादिरूपेण कारणताया व्यभिचारेणासंभवादतिरिक्तशक्तिसिद्धिः। नच तृणफूत्कारयोररणिनिर्मन्थनयोर्मणिकिरणयोश्च[2][3][4] संबन्धस्य जन्यतावच्छे-

रामरुद्री।

रिति दैशिकविशेषणतानिवेशः। दैशिकविशेषणतया तु न द्रव्यस्याव्याप्यवृत्तित्वमिति न दाहानुपपत्तिरिति भावः। इदंच भावाभावसाधारणदैशिकविशेषणतामभ्युपेत्योक्तम्। **मण्यादेरिति**। आदिना मन्त्रादेः परिग्रहः। अतएव संबन्धकोटौ उद्देश्यताप्रवेशः। संयोगस्थाने दैशिकविशेषणताप्रवेशे तूक्तैव युक्तिः। **वह्निद्व्यणुकत्वमिति**। वह्निद्व्यणुकवृत्तिपरिमाणव्यक्तिमित्यर्थः। तेन वह्निद्व्यणुकत्वस्य नानाद्व्यणुकेषु-सत्वेपि न क्षतिः। **ननु** महत्त्वविशिष्टवह्नेरेव पक्षत्वान्न सिद्धसाधनमित्यत आह—**भर्जनकपालस्थेति**। वह्निद्व्यणुकेन्धनसंयोगमादायापि महद्वह्नेः पक्षत्वे न सिद्धसाधनमत उक्तं **मदृष्टवदात्मसंयोगमिति**। स्वाश्रयसंयोगसंबन्धेन कार्यमात्रे अदृष्टस्य हेतुतया तत्संबन्धेन संयोगस्यापि हेतुत्वादिति भावः। यद्यप्यत्रात्मनो दृष्टान्तत्वमसंगतं तस्य दाहजनकत्वे मानाभावात्। तथापि कार्यमात्रे कर्तुरेव कारणत्वमताभिप्रायेणैवमुक्तम्। **यद्वा** दाहजनकत्वमत्र न दाहका-

---

१ एवकारोप्यर्थकः। एवंशक्तिसत्वे प्रमाणांतरसत्वेपि न क्षतिः. २ अव्यवहितोत्तरत्वसंबन्धेन तृणफूत्कारविशिष्टाग्निं प्रति तृणफूत्कारः कारणम्. ३ एवं अव्यवहितोत्तरत्वसंबन्धेन अरणिनिर्मन्थनविशिष्टवह्निंप्रति अरणिनिर्मन्थनं कारणम्. ४ अव्यवहितोत्तरत्वसंबन्धेन मणिकिरणसंयोगविशिष्टाग्निंप्रति मणिकिरणसंयोगः कारणं इति रीत्या कारणत्वं वक्तव्यं तथाच न व्यभिचार इति भावः.

दिनकरी।

दकं वह्निवृत्तिवैजात्यत्रयं कल्प्यमिति न व्यभिचार इति वाच्यम्, तज्जन्यतावच्छेदकवैजात्यत्रयकल्पनामपेक्ष्य तत्तत्संबन्धानामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वादित्याहुस्तन्न। तत्तत्संबन्धसाधारण्येनैकजातेरेवाभ्युपगमात्। नच योग्यवृत्तिजातेर्योग्यत्वापत्तिरिति वाच्यं, दोषविशेषेण शक्तेरिवायोग्यत्वकल्पनात्। नच नोदनत्वादिना संकरः। तस्यादोषत्वादन्यतमत्वेन कारणतासंभवाच्च। नचान्यतमत्वघटकभेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण कारणतावच्छेदकभेदात्कारणताबाहुल्यमिति वाच्यम्, कारणतावच्छेदकानां भेदानां समनियतानामैक्येन कारणतैक्यसंभवात्। नच भेदानां स्वरूपतोवच्छेदकत्वासंभवेन तृणफूत्कारसंयोगभेदविशिष्टारणिनिर्मन्थनसंबन्धभेदविशिष्टमणिकिरणसंबन्धभेदावच्छिन्नप्रतियोगिताकभेदत्वादिनावच्छेदकत्वं वक्तव्यम्। तथाचावच्छेदकतावच्छेदकभेदादवच्छेदकताभेदस्तद्भेदेन च कारणताभेद इति वाच्यम्, स्वरूपसंबन्धरूपाया अतिरिक्ताया वा कार-

रामरुद्री।

रणत्वं अपितु दाहप्रयोजकत्वं तच्च कारणतत्कारणसाधारणं स्वरूपसंबन्धरूपमिति कार्यमात्रकारणकृतिकारणात्मन्यप्यक्षतमेवेति ध्येयम्। **न्याय्यत्वादिति**। एतच्चापाततः। शक्तेः प्रतिबन्धकनाश्यतयातदपसारणजन्यतया चोत्पादविनाशशालित्वेनानन्तशक्तिकल्पनापत्त्याविपरीतगौरवापत्तेरिति ध्येयम्। **दोषविशेषेणेति**। अदृष्टादिरूपेणेत्यर्थः। अन्यथा त्वन्मतेऽपि वह्निगतशक्तिप्रत्यक्षापत्तेरिति भावः। **तस्यादोषत्वादिति**। स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसंबन्धेन जातिविशिष्टजातित्वस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभावव्याप्यत्वे मानाभावेन सांकर्यस्य जातित्वबाधकत्वे मानाभावादिति भावः। **स्वरूपतोऽवच्छेदकत्वासंभवेनेति**। जातीतरस्य स्वरूपतो भानानङ्गीकारात्। यस्य स्वरूपतो भानं तस्यैव स्वरूपतोऽवच्छेदकत्वनियमादिति भावः। **स्वरूपसंबन्धरूपाया इति**। तत्तत्कारणव्यक्तिरूपायाः कारणतावच्छेदकभेदेन भेदासंभवादिति भावः। **अतिरिक्ताया इति**। सप्तपदार्थातिरिक्ताया इत्यर्थः। तादृशकारणताया अवच्छेदकताभेदाद्भेदे नानाकारणताव्यक्तिकल्पनागौरवापत्त्या नानावच्छेदकतानिरूपितैककारणताया एव कल्पयितुमुचितत्वादिति भावः। व्यापकतारूपकारणताया एव प्रतियोगितावच्छेदकतापर्याप्त्यनवच्छेदकधर्मघटितत्वेन अवच्छेदकत्वादिभेदेन भिन्नत्वादिति ध्येयम्। इदमुपलक्षणम्। भेदस्य तद्व्यक्तित्वेन कारणतावच्छेदकत्वेऽपि

**साहश्यमपि न पदार्थान्तरं किंतु तद्भिन्नत्वे सति तद्गतभूयो-**

दिनकरी

णताया अवच्छेदकभेदेऽप्यभेदादित्यन्यत्र विस्तरः। **परेतु** तृणादिसंबन्धकालीनवायुसंयोगादीनामेकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहान्न शक्तिसिद्धिरित्याहुः। यदाशङ्कितं सादृश्यमप्यतिरिक्तपदार्थ इति तदपि निराकरोति—**सादृश्यमपीति। तद्भिन्नत्वे सतीति।** इदंच सादृश्यनिरूपकेऽतिव्याप्तिवारणाय। अनुयोगितासंबन्धविवक्षणे तु न देयमेव। **तद्गतभूयोधर्मवत्त्वमिति।** तत्रासाधारण्येन विद्यमाना ये भूयांसो धर्मास्तद्वत्त्वमित्यर्थः।

रामरुद्री।

न क्षतिरिति द्रष्टव्यम्। यद्यपि घटादिकार्यं प्रति तत्तत्कार्यानुकूलैकशक्तिमत्वेन कारणत्वे लाघवं दण्डत्वादिना नानाकारणत्वकल्पने गौरवं प्रतिबन्धकसमवधानकालीनकारणेषु शक्त्यभावादेव कार्यानुत्पादसंभवे प्रतिबन्धकाभावस्य कारणत्वाकल्पनेन च महालाघवादिति शक्तिकल्पनमेव ज्यायः। नन्व दण्डचक्रादिषु सर्वत्रैकशक्तिमङ्गीकृत्य तद्वत्वेन कारणत्वे केवलदण्डादपि घटोत्पत्तिः स्यात् अशेषकारणतावच्छेदकावच्छिन्नस्य सत्वादिति वाच्यम्। शक्तेः कारणसमुदायपर्याप्तत्वोपगमेन पर्याप्तिसंबन्धेन शक्तिमत्त्वेनैव कारणत्वाभ्युपगमेन च केवलदण्डसत्वदशायां कारणतावच्छेदकावच्छिन्नस्याभावात्। एतन्मते सामग्रीत्वमपि यद्यद्धर्मावच्छिन्नसमुदाये कारणतावच्छेदकपर्याप्तिः[1] तत्तद्धर्मावच्छिन्नसमुदायत्वमेव। तथापि दण्डत्वादिना घटकारणत्वाभावे दण्डत्वाद्यवच्छिन्नधर्मिकेष्टसाधनताज्ञाना[2]संभवेन घटार्थिनो नियमतो दण्डत्वाद्यवच्छिन्नोपादाने न प्रवृत्तिः स्यादिति दण्डत्वादिना घटकारणत्वमावश्यकमिति भावः। सर्वमिदं मनसि निधायैवान्यत्र विस्तर इत्युक्तमिति। यद्यप्येवमपि तत्तद्धर्मावच्छिन्नसमुदायधर्मिककारणतावच्छेदकशक्तिपर्याप्तिज्ञानं तत्तद्धर्मावच्छिन्नोपादानगोचरप्रवृत्तिकारणमित्युक्तौ घटार्थिनो नियमतो दण्डत्वाद्यवच्छिन्नोपादाने प्रवृत्तिः संवभत्येव तथाप्येतदस्वरसेनैव परे त्वित्यादिना शक्तिखण्डनयुक्त्यन्तराभिधायिनो मतस्य अभिधास्यमानत्वान्नासंगतिरिति ध्येयम्। **अनुयोगितासंबन्धविवक्षणे इति।** तद्गतभूयोधर्मवत्वं तत्सादृश्यमित्यत्र तद्गतधर्मवत्ताया अनुयोगितासंबन्धेन विवक्षणे इत्यर्थः। **न देयमेवेति।** तद्गतधर्मरूपसंबन्धे तदनुयोगिकत्वानभ्युपगमेनैव सादृश्यप्रतियोगिन्यतिव्याप्तिवारणसंभवादिति भावः। **ननु** पदार्थमात्रस्यैव पदार्थमात्रेणापि सादृश्यं स्यात्तद्गतप्रमेयत्ववाच्यत्वादिधर्मवत्वसत्वादित्याशङ्कां निराकुरुते—**तत्रासाधारण्येनेति।** सकलपदार्थावृत्तित्वेनेत्यर्थः। वैशिष्ट्यं तृतीयार्थः। घटभिन्नत्वेन सिंहकाकयोरपि सादृश्यापत्तिवारणाय भूयांस

१ पर्याप्तिश्च स्वरूपसंबन्धविशेषः. २ दंडत्वावच्छिन्नं मदिष्टसाधनमिति इष्टसाधनताज्ञानम्.

**धर्मवत्त्वम्, यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥**

दिनकरी ।

**नन्विदं 'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिवे"त्यादावव्याप्तमिति चेन्न । तद्वृत्तिधर्ममात्रस्य तत्र विवक्षितत्वाद्युगभेदविवक्षया भेदसत्वाद्वा । अतएव युगभेदविवक्षायामिहोपमालङ्कारोऽन्यथानन्वयालंकार इत्युक्तमालंकारिकैः । सादृश्यघटकधर्मश्च क्वचिज्जातिरूपो यथा घटसदृशः पट इत्यादौ । क्वचिदुपाधिरूपो यथा गोत्वं नित्यं तथाश्वत्वमपीत्यादौ यथा वा चन्द्रसदृशं मुखमित्यादावाह्लादकरत्वादि । अतिरिक्तकल्पने गौरवा-**

रामरुद्री ।

इति । नच चन्द्रगतभूयोधर्मस्य चन्द्रसंबन्धत्वे किं मानमिति वाच्यम् । नीलो घट इत्यादौ स्ववृत्तिनीलत्वसंबन्धेन घटे नीलस्येव मुखं चन्द्र इति रूपकस्थले स्ववृत्तिभूयोधर्मसंबन्धेन मुखे चन्द्रस्य प्रकारतावादिमते तत्र तत्संबन्धत्वस्य क्लृप्तत्वादिति ध्येयम् । यद्यपि घटभेदपटभेदादयो भूयांसो धर्मास्तत्रापि संभवन्त्येव गोत्वाश्वत्वयोर्नित्यत्वरूपैकधर्ममादाय सादृश्यमङ्गीकृत्यैवोक्तमिति भूयस्त्वोपादानमसङ्गतमेव तथापि प्रायेण भूयोधर्मैरेव सादृश्यप्रतीतिरिति तात्पर्यविषयार्थकमेव प्रकृते भूयःपदमिति ध्येयम् । नरोऽयं सिंह सदृश इत्यादौ तु घटभिन्नत्वादिर्न तात्पर्यविषयः । किंतु पराक्रमः तस्यापि तथात्वेतिविष्टापत्तेः । तस्मादसाधारण्येनेत्यपि न देयम् । यथा घटो वाच्यस्तथा पटोऽपीति व्यवहाराच्च । **नन्विदमिति** । तद्भिन्नत्वघटितसादृश्यमित्यर्थः । विवक्षितत्वादित्यस्य श्लोके इवाद्यर्थत्वेनेति शेषः । **युगभेदविवक्षयेति** । युगभेदप्रयुक्ततत्तद्युगविशिष्टगगनभेदविवक्षयेत्यर्थः । **भेदसत्त्वाच्चेति** । गगने गगनभेदसत्वाच्चेत्यर्थः । उक्तार्थे आलंकारिकाणां संमतिमाह । **अतएवेति** । युगभेदविवक्षायामित्यस्य पूर्वोक्त एवार्थः । **इहेति** । गगनं गगनाकारमिति श्लोके इत्यर्थः । **उपमालंकार इति** । सादृश्यस्याबाधितत्वादिति भावः । **अन्यथा** विशेष्ययोर्भेदानङ्गीकारे । **अनन्वयालंकार इति** प्रतिपाद्यमानार्थस्यान्वयाभावादिति भावः । **ननु** उक्तसादृश्यलक्षणे धर्मपदं यदि जातिपरं तदा गोत्वाश्वत्वयोः सादृश्यानुपपत्तिः, यदिच जातिभिन्नोपाधिपरं तदा घटपटयोः कम्बुग्रीवादिमत्वादिरूपैकोपाधिविरहेण तयोस्सादृश्यं न स्यादित्याशङ्कां निराकरोति—**सादृश्यघटकधर्म इति** । चन्द्रसदृशं मुखमित्यादौ लक्षणसत्वं सूचयितुमाह—**यथेति** । **आह्लादकरत्वादीति** । आह्लादः सुखविशेषः । यद्यपि चन्द्र-

१ तथाच भिन्नत्वं भेदः तस्याभावेन्तर्भावः भूयो धर्मः आह्लादकत्वं तच्च आह्लादजनकत्वं, आह्लादजनकत्वं आह्लादाव्यवहितप्राक्लक्षणावच्छेदेन आह्लादाधिकरणवृत्ति अत्यन्ताभावाप्रतियोगित्वं तस्याभावेऽन्तर्भाव इति तात्पर्यम्. २ सादृश्ये इति शेषः । उक्तस्थलत्रये तद्भिन्नत्वरूपसत्यन्तासत्त्वादिति भावः. ३ युगभेदेन विवक्षणादेव.

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।**
**द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥३॥**

**द्रव्याणि विभजते ॥ क्षितिः पृथिवी । आपो जलानि ।**

दिनकरी

दिति । नव्यास्तु सादृश्यमतिरिक्तमेव । नचातिरिक्तत्वे पदार्थविभागव्याघात इति वाच्यम् । तस्य[1] साक्षात्परम्परया वा तत्त्वज्ञानो-

रामरुद्री

मुखदर्शनजन्ययोः सुखयोर्भिन्नत्वेन चन्द्रमुखयोर्नैकमाह्लादकरत्वं कारणतावच्छेदकभेदेन कारणताभेदस्यावश्यकत्वात् तथापि स्वाश्रयोपधायकत्वसंबन्धेन एकवैजात्यविशिष्टत्वमेव प्रकृते साधारणो धर्मः मुखचन्द्रदर्शनजन्यं च एकजातीयमेव सुखमिति भावः । आदिना वर्तुलत्वतेजस्वित्वादिपरिग्रहः । सादृश्यमिति शेषः । अतएवातिरिक्तपदेनोत्तरत्र तस्योपस्थितिः । सप्तपदार्थातिरिक्तेति तदर्थः । सप्तपदार्थातिरिक्तविषयतादिपदार्थमङ्गीकुर्वतां नव्यानां मतमुपदर्शयति—**नव्यास्त्विवति । अतिरिक्तमेवेति ।** अन्यथा सदृश इत्याकारकप्रतीतेः सर्वत्र समानाकारतानुभवापलापापत्तेरिति शेषः। प्रतीतेः समानत्वमेकप्रकारकत्वं तथा च चन्द्रसदृशं मुखमित्यादौ आह्लादकरत्वादेः प्रकारता घटसदृशः पट इत्यादौ तु द्रव्यत्वपृथिवीत्वादेरिति तादृशप्रतीत्योः सादृश्यांशे अनुभवसिद्धायाः समानाकारतायाः अपलाप उक्तधर्मस्य सादृश्यतावादिमते दुरुद्धरः । सादृश्यमतिरिक्तः पदार्थ इति मते तु न तदनुपपत्तिः । यद्यपि मुखे चन्द्रे च नैकं सादृश्यं अन्यथा पटे चन्द्रसादृश्यप्रतीत्यापत्तिरिति सादृश्यांशे तादृशप्रतीत्योर्न समानाकारतोपपत्तिः तथापि उभयसादृश्यसाधारणस्य सादृश्यत्वरूपाखण्डोपाधेरनुगततया घटो रूपवान् पटो रूपवानिति प्रतीत्योरूपांश इव सादृश्यांशे समानाकारतोपपत्तिरिति ध्येयम् । **विभागव्याघात इति ।** पदार्थानां सप्ताधिकत्वादिति भावः । **तत्त्वज्ञानोपयोगीति ।** आत्मधर्मिकात्मेतरद्रव्यादिभेद[2]प्रकारकज्ञानं तत्त्वज्ञानं, तज्जनकज्ञानविषयत्वं तदुपयोगित्वं तादृशज्ञाने च पक्षज्ञानविधया आत्मज्ञानस्य प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानविधया द्रव्यादिपदार्थज्ञानस्य जनकत्वात् आत्मादीनां तत्त्वज्ञानोपयोगिता । तत्र च तादृशानुमितिजनकपरामर्शात्मकज्ञानस्य पक्षरूपात्मविषयकत्वात्साक्षादात्मन उपयोगित्वं परामर्शजनकप्रतियोगिज्ञानविषयद्रव्यादिपदार्थानां तु परंपरोपयोगित्वमिति विशेषो बोध्यः । यद्यपि द्रव्यादिभेदव्याप्यहेतुमानिति परामर्शस्य द्रव्यादिविषयकतया द्रव्यादीनामपि साक्षादुपयोगित्वसंभवस्तथापि भेदानां तत्तद्व्यक्तित्वेनापि परामर्शे भानसंभवेन तत्तद्भेदव्याप्यहेतुमानात्मेति परामर्शस्य द्रव्याद्यविषयकत्वात्परंपरोपादानम् । अत्र मात्रपदेन सप्तपदार्थातिरिक्तसादृश्यादिपदार्थव्यवच्छेदः । तथाच सादृश्यादीनामात्मभिन्नपदार्थानां सत्वेपि

१ विभागग्रन्थस्य. २ आत्मा आत्मेतरद्रव्यभिन्न इति ज्ञानाकारः.

**तेजो वह्निः । मरुद्वायुः । व्योम आकाशः । कालः समयः ।**

दिनकरी ।

पयोगिपदार्थमात्रनिरूपणपरत्वात् । एवमधिकरणत्वमपि तस्य संयोगादिरूपत्वे बदरकुण्डसंयोगस्य द्विष्ठत्वेन कुण्डे बदरमितिवद्बदरे कुण्डमित्यपि प्रयोगः स्यात् एवं प्रतियोगित्वमपीत्याहुः[2] । सादृश्यलक्षणं लक्ष्ये योजयति—**यथेति** । इतिशब्दः श्लोकव्याख्यासमाप्तिद्योतकः ॥ २ ॥ 'स्त्रियां क्तिन्नि'तिसूत्रविहितक्तिन्प्रत्ययान्तक्षितिशब्दस्य क्षयवाचकत्वात् क्षितिपदस्य प्रकृतोपयोगिनमर्थमाह—**क्षितिः पृथिवीति** । अपूशब्दस्य 'अप्तृन् तृजि'त्यादिपाणिनीयसूत्रे शब्दपरत्वादाह—**आपो जलानीति** । प्रतापस्यापि तेजःशब्दवाच्यत्वात्प्रकृते तेजःपदार्थं दर्शयति—**तेजो वह्निरिति** । वह्न्यादिरित्यर्थः । देवविशेषस्यापि मरुच्छब्दवाच्यत्वात्प्रकृतोपयोगिनमर्थमाह—**मरुद्वायुरिति** । व्योमशब्दस्य वेदे ब्रह्मणि प्रयोगादाह—**व्योम आकाश इति** । कालशब्दस्यान्तकादिबोधकत्वा-

रामरुद्री ।

आत्मनि तद्भेदो नानुमितिविषय इति तदेतज्ज्ञानं न तत्त्वज्ञानमतस्तद्भेदज्ञानजनकज्ञानविषयस्यापि सादृश्यादेर्न तत्त्वज्ञानोपयोगितेति भावः । एवं च तत्त्वज्ञानोपयोगिपदार्थानामेव महर्षिणा विभजनान्न विभागव्याघात इति भावः । अधिकरणत्वादीनामतिरिक्तत्वं साधयति—**एवमिति** । **कुण्डे बदरमिति** । इत्थं चाधारत्वं सप्तम्यर्थः । तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । आधारत्वस्य च निरूपकतासंबन्धेन सप्तमीसमभिव्याहृतबदरादिपदार्थेऽन्वयः । तथाच कुण्डवृत्त्याधारतानिरूपकं बदरमिति बोधः । इदं प्राचीनमताभिप्रायेण । आधेयत्वं सप्तम्यर्थ इति नवीनमते तु कुण्डं बदरवदितिवद्बदरं कुण्डवदित्यापत्तिर्द्रष्टव्या । **प्रतियोगित्वमपीति** । एवं अतिरिक्तपदार्थ इत्यर्थः । प्रतियोगितायाः प्रतियोगिस्वरूपत्वे भूतलादेरपि घटाभावादिप्रतियोगितापत्तिः घटः प्रतियोगितावानित्याधारताप्रतीत्यनुपपत्तिश्च । प्रतियोगितावच्छेदकस्वरूपत्वेऽभेदेनावच्छेद्यावच्छेदकभावविरहेण घटत्वादेः प्रतियोगितावच्छेदकत्वानुपपत्तिश्चातिरिक्तत्वसाधिकेति भावः । अपिना विषयत्वादिसमुच्चयः ॥ २ ॥ ननु क्षितिः पृथिवीत्यादिव्याख्यानं ग्रन्थकृतामसङ्गतम् । क्षित्यादिशब्दानां प्रसिद्धार्थकत्वात् । अप्रतिपत्तेरन्यथाप्रतिपत्तेर्वा निरासायैव हि विवरणं कुर्वन्ति सन्तः । नचात्र तयोरेकतरापि संभवतीत्यतोऽन्यथाप्रतिपत्तिमुपपादयन् तत्सार्थक्यमाह **स्त्रियामित्या-**

---

१ अतिरिक्तः पदार्थ इति शेषः. २ अतिरिक्तमिति शेषः.

**दिगाशा । देही आत्मा । मनः । एतानि नव द्रव्याणीत्यर्थः ।**

दिनकरी ।

दाह—**कालः समय इति** । दिक्शब्दस्य 'दिश अतिसर्जने' इति धातुना निष्पन्नस्य दानार्थकत्वात्प्रकृतोपयोगिनमर्थमाह—**दिगाशेति** । देहविशिष्टार्थवाचकाद्देहिशब्दाद्देहावयवानामुपस्थितेराह—**देही आत्मेति** । अथेश्वरस्य देहिनां मध्येनन्तर्भावात्कथं द्रव्यत्वमिति चेन्न । वृद्धा भूतावेशन्यायेनेश्वरस्य शरीरमिच्छन्ति । संसार्यदृष्टवशाच्छरीरमित्यन्ये । अत एवास्वरसादाहत्मेति । पृथिव्यप्तेजोवाय्वात्मान इति पञ्चैव द्रव्याणि व्योमादेरीश्वरात्मन्येवान्तर्भूतत्वात् मनसश्चासमवेतभूतेऽन्तर्भावादित्याहुर्नवीनास्तन्मतं निराकर्तुं संख्याबोधकपदपूरणेनार्थमाह—**एतानि नव द्रव्याणीति** । व्योम्नस्तावच्छब्दाश्रयतयासिद्धिः । नच भगवत एव शब्दाश्रयत्वम् । प्रत्येकं जीवमादाय विनिगमनाविरहात् । नच जीवानामाश्रयत्वे शब्दवा-

रामरुद्री ।

**दिना । आत्मेतीति** । स्वावच्छिन्नभोगवत्त्वसंबन्धेन देहविशिष्ट एव देहिशब्दार्थः । नतु समवायेन तद्विशिष्ट इति न देहावयवोपस्थितिरिति भावः । **अनन्तर्भावादिति** । ईश्वरस्य किंचिच्छरीरावच्छेदेन भोगाभावादिति भावः । **कथं द्रव्यत्वमिति** । सामान्यव्याप्ययावद्धर्मकथनस्यैव विभागतया द्रव्यविभागवाक्ये ईश्वरवृत्तिधर्मान्तरानुपदेशात्तस्य द्रव्यत्वाभावनिश्चयादिति भावः । **भूतावेशन्यायेनेति** । यथा भूताभिभवस्थले मनुष्यादिशरीरावच्छेदेन भूतस्य न सुखदुःखसाक्षात्काररूपभोगाश्रयता किंतु तदीयशरीरावच्छेदेनैव, एवमपि भूतप्रयत्नजन्यव्यापारवन्मनुष्यादिशरीरं तथात्रापि रामादिशरीरं नेश्वरस्य भोगावच्छेदकं अपि तु तदन्तर्गतजीवस्यैव एवमपि ईश्वरप्रयत्नजन्यरावणवधादिरूपविलक्षणव्यापारवदिति समुदायार्थः । **यद्यपि** एवमपि उक्तसम्बन्धेनेश्वरस्य देहविशिष्टत्वाभावात् देहिशब्दान्नेश्वरलाभः संभवति **तथापि** स्ववृत्तिचेष्टाजनककृतिमत्त्वसम्बन्धेन देहविशिष्ट एव प्रकृते देहिशब्दार्थ इति नानुपपत्तिरिति भावः । **नन्वेवं** ईश्वरस्य श्रुतावपाणिपादत्वाद्युक्तिर्विरुध्येतेत्यतः कल्पान्तरमाह—**अत एवेति** । अयं भावः, देहिशब्दस्य उक्तसंबन्धेन देहविशिष्टार्थकत्वे ईश्वरस्य शरीरानङ्गीकारे ईश्वरस्य द्रव्यमध्ये अविभजनात् द्रव्यत्वं न स्यादित्यस्वरसात् देहिशब्दार्थो न देहविशिष्टः अपितु आत्मत्वजात्यवच्छिन्न इतीश्वरस्य द्रव्यत्वसिद्धिरिति विवरणतात्पर्यम् । नचेश्वरस्य अशरीरत्वे ब्रह्मविष्णुमहेश्वर-

१ परमाणुपु.

**ननु द्रव्यत्वजातौ किं मानं नहि तत्र प्रत्यक्षं प्रमाणं घृतज-**

दिनकरी ।

नहमिति प्रत्यक्षापत्तिः; अदृष्टवदयोग्यत्वस्यैव कल्पनात् । कालदिशोस्तु एतस्मिन्काले घटः, पूर्वस्यां दिशि पट इत्याद्यनुगताकारप्रत्ययात् । मनसश्चासमवेतभूतत्वे पार्थिवादित्रसरेणूनादाय विनिगमनाविरह इत्याशयः । अधिकमग्रे व्यक्तीभविष्यति । **मूले द्रव्याणीति** । द्रव्यपदं द्रव्यत्वरूपजातिविशिष्टार्थकं नतु गुणाश्रयत्वविशिष्टार्थकं गौरवात् । **मुक्तावल्यां किं मानमिति** । **किंशब्दः** प्रश्ने । **ननु** द्रव्यं द्रव्यमित्यनुगतप्रतीतिरेव जातिसाधिका भविष्यतीत्यत आह—**नहीति** । **तत्र** । **द्रव्यत्वजातौ** । **घृतेति** ।

रामरुद्री ।

शरीराणामपि ईश्वरीयत्वं न स्यात् जीवादृष्टवशेन सृष्ट्यादिकार्यार्थमीश्वरस्य ब्रह्मादिशरीरोत्पत्त्यङ्गीकारेण इष्टापत्तेरयोगादिति वाच्यम् । इष्टत्वात् । ब्रह्मादिशरीराणां ईश्वरीयत्वं हि तदीयभोगावच्छेदकत्वं तददृष्टजन्यत्वं वा तत्कृतिजन्यचेष्टावत्त्वं वा । नाद्यद्वितीयौ, तस्य भोगादृष्टयोरभावात् । नापि तृतीयः, समवायेन चेष्टां प्रति अवच्छेदकतासम्बन्धेनैव कृतेः कारणतया व्याप्यवृत्तित्वेनेश्वरकृतेरवच्छेदकतया क्वाप्यसत्वात् । कार्यत्वावच्छिन्नकारणताया एव तत्राङ्गीकारात् । ब्रह्मादीनां जीवन्मुक्तयोगित्वस्याभ्युपेयत्वादिति ध्येयम् । **अयोग्यत्वस्यैवेति** । मानसप्रत्यक्षायोग्यत्वस्यैवेत्यर्थः । तेन शब्दस्य श्रावणत्वेपि न क्षतिरिति भावः । **त्रसरेणूनिति** । नवीनमते[1] अवयवधारायास्त्र्यणुकेष्वेव विश्रान्तेस्तेषामेवासमवेतत्वादिति भावः । **विनिगमनाविरह इति**[2] । तथाचानेकद्रव्यव्यक्तिषु मनस्त्वस्वीकारापेक्षया एकैकातिरिक्तव्यक्तिषु तत्तन्मनस्त्वं स्वीकर्तुमुचितमिति भावः । **ननु** द्रव्याणीति मूलवाक्यस्यातिरिक्तद्रव्यत्वजात्यभावेपि नानुपपत्तिः गुणवदाद्यर्थकत्वेनापि तद्विवरणसंभवात् अतो मुक्तावल्यां द्रव्यत्वसाधनायासो विफल इत्याशङ्कामपनेतुं मूले द्रव्यपदस्य द्रव्यत्वविशिष्टार्थकतां व्यवस्थापयति—**द्रव्यपदमिति** । **प्रश्न इति** । जिज्ञासाबोधकशब्दः प्रश्नः । घटकत्वं सप्तम्यर्थः । तथाच मूलस्थकिंशब्दः जिज्ञासार्थक इति पर्यवसितोऽर्थः । उत्तरवाक्येन प्रमाणसामान्यस्यानिरासेन किंशब्दस्य आक्षेपार्थकत्वासंभवादिति भावः । **घृतादिष्विति** । नच घटादावित्येव कुतो नोक्तमिति वाच्यम् । अनुगतप्रतीत्यभावे बीजसूचनाय घृताद्युपादानात् । तथाहि अनुगताकृतिव्यंग्या हि मनुष्यत्वादिजातिः, नहि नव द्रव्येष्वनुगताकृतिः काचित्संभवति, घृतादिष्वेकैकपदार्थेष्वपि सर्वदा

---

१ दीधितिकारमते. २ एकतरपक्षपातिनी युक्तिर्विनिगमना. ३ घटकत्वं सप्तम्यर्थः तस्यच द्रव्यपदेऽन्वयस्तथा च मूलघटकद्रव्यपदस्येत्यर्थः.

